TELANGA & CHAUBEY'S



# THE NEW VEDIC SELECTION

## Part I

( Revised and Enlarged Edition )

By

Dr. BRAJ BIHARI CHAUBEY,
M. A., Ph.D., Sāhityaratna,

Lecturer, V. I. S. & I. S., Panjab University
Hoshiarpur ( Panjab )

1980

BHARATIYA VIDYA PRAKASHAN
VARANASI DELHI

*Dedicated to*

*Revered Guru*

**Dr. Siddheśvara Bhaṭṭācārya**

"स नः पितेव सूनवेऽग्ने सूपायनो भव"

# PREFACE

***The New Vedic Selection,*** consisting of representative pieces from the Saṃhitās, Brāhmaṇas, Āraṇyakas, Upaniṣads and important Vedāṅgas, was prepared by me in collaboration with my revered teacher Pt. N. K. S. Telanga, on the kind advice of Dr. S. Bhattacharya, Professor and Head of the Department of Sanskrit and Pali, Banaras Hindu University. The book was subsequently, I am glad to state, prescribed for B. A. and M. A. courses in the Universities. I must express my indebtedness to the Universities for their encouragement.

In June, 1971, ***The New Vedic Selection*** became out of print. Unfortunately our plan to bring out a second edition was to be dropped, because of the sad premature demise of Pt. N. K. S. Telanga in August, 1971. However, due to the pressing demand for the book from students and teachers I felt compelled to take up the plan to bring out a revised edition. But in spite of my persistent efforts the revised edition could not be brought out earlier for various reasons which were beyond my control.

Since ***The New Vedic Selection*** contained Vedic Texts prescribed for B. A. as well as for M. A. Classes, it was felt that for the convenience of students the book be published in two parts, separating the relevant portions prescribed for the respective courses. The first part included the hymns prescribed for B. A. courses by the Banaras Hindu University, but later, when the book was under print, on the suggestion of Dr. Adya Prasad Mishra,

Professor and Head of the Department of Sanskrit, University of Allahabad, the following hymns covering the courses of B. A. of the Allahabad University were also added :—

1. Agni Sūkta ( ṚV. I. 1 )
2. Hiraṇyagarbha Sūkta ( ṚV. X. 121 )
3. Vāk Sūkta ( ṚV. X. 125 )
4. Puruṣa Sūkta ( Śukla YV. XXXI. 1–16 )
5. Śivasaṃkalpa Sūkta ( Śukla YV. XXXIV. 1–6 )
6. Pṛthivī Sūkta ( AV. XII. 1 )

The Part I now covers the B. A. courses of various Indian Universities.

To make the Selection more useful to B. A. students I have given the prose-order ( *anvaya* ) of each mantra. In the present edition words in the Notes also are presented with their proper accent-marks. Realizing the difficulty of the students of Hindi-speaking area, I have given the four appendices on Vedic Grammar, Vedic Accent, Vedic Metre and Vedic Deities in Hindi in this part. These appendices will be helpful for the beginners.

Now it is my pleasant duty to acknowledge my obligations to scholars who have given their constructive suggestions to make this edition more useful. I find no word sufficient to express my gratitude to my revered Guru Dr. S. Bhattacharya for the valuable suggestions given to me from time to time by him. But for the interest shown and guidance given by him the book could not have been completed in–time. I am also grateful to Dr. Adya Prasad

Mishra, Professor and Head of the Department of Sanskrit, Allahabad University, Dr. B. R. Sharma, Professor of Sanskrit, V. I. S. & I. S., Panjab University, Hoshiarpur and Dr. Virendra Kumar Varma, Reader in Sanskrit, B. H. U., for the suggestions which they readily gave me whenever I had occasions to discuss the problems connected with *The New Vedic Selection.*

My thanks also are due to shri Jitendracharya ji who assisted me in correcting the proofs. In spite of the care I have taken and efforts put in, there might be printing errors and other mistakes still remaining in the book, for which I crave the indulgence of the readers.

At the end I must thank the Publishers, Bharatiya Vidya Prakashan, Kachaurigali, Varanasi, who took very keen interest in publishing this book in their series; Shri Narayan Mhaskar, the proprietor, Jyotish Prakash Press, Kal Bhairava Marg, Varanasi, as also the workers of the Press for their full cooperation in seeing the book through the Press.

**5th September, 1972**
**( On the eve of Teachers' Day )**

**Braj Bihari Chaubey**

## CONTENTS

"तन्मे॒ मनः॑ शि॒वसं॑कल्पमस्तु"

शु० य० ३४.१

( May that mind of mine be of auspicious Resolution )

'वह मेरा मन शुभ संकल्प वाला हो'

# ṚGVEDA

## No. 1 [I. 1

## AGNI

एतच्चाग्निमित्यादिसूक्तं नवर्चम् 'अग्निं नव मधुच्छन्दा वैश्वामित्र' इत्यनुक्रमणिकायामुक्तत्वात्। विश्वामित्रपुत्रो मधुच्छन्दोनामकस्तस्य सूक्तस्य द्रष्टृत्वात् तदीय ऋषिः। 'ऋष गतौ' इति धातुः। 'सर्वधातुभ्य इन्' (उ० सू० ४.५५७) 'इगुपधात्कित्' (उ० सू० ४.५५९)। वेदप्राप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान् स्वयंभूर्वेदपुरुषः प्राप्नोत्। तथा च श्रूयते—'अजान्ह वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयंभ्वभ्यानर्षत्तदृषयोऽभवन्' (तै० आ० २.९) इति। तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनात् ऋषित्वमित्यभिप्रेत्य स्मर्यते—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥ इति।

ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्यते—

अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।
योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः॥
ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते॥ इति।

वेदनविधिश्च स्मर्यते—

स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे॥ इति।

अग्निमित्यादिसूक्तस्य छन्दोनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तम्। 'आदौ गायत्रं प्राग्घिरण्यस्तूपात्' (अनु० १२.१४.) इति। हिरण्यस्तूप ऋषिर्येषां मन्त्राणां वक्ष्यते ततः प्राचीनेषु मन्त्रेषु सामान्येन गायत्रं छन्द इत्यर्थः। पुरुषस्य पापसंबन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यते। तच्चारण्यकाण्डे समाम्नायते—'छादयन्ति ह वा एवं छन्दांसि पापात्कर्मणः' (ऐ० आ० २.५) इति। अथवा चीयमानाग्निसंतापस्याच्छादकत्वाच्छन्दः। तच्च तैत्तिरीया आमनन्ति—'प्रजापतिरग्निमचिनुत, स क्षुरपविर्भूत्वाऽतिष्ठत्तं देवा

बिभ्यतो नोपायन्ते छन्दोभिरात्मानं छादयित्वोपायन्तच्छन्दसां छन्दस्त्वम्' ( तै० सं० ५.६.६.१. ) इति । यद्वा अपमृत्युं वारयितुमाच्छादयतीति छन्दः । तदपि छान्दोग्योपनिषद्याम्नातं—'देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरात्मानमच्छादयन्यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम्' ( छां० उ० १. ४. २ ) इति । तथा द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते—'दिवा वै नोऽभूदिति तद्देवानां देवत्वम्' इति । अतो दीव्यतीति देवः । मन्त्रेण द्योतते इत्यर्थः । अस्मिन् सूक्ते स्तूयमानत्वादग्निर्देवः । तथा चानुक्रमणिकायामुक्तं—'मण्डलादिष्वाग्नेयमैन्द्रात्' ( अनु० १२.१२ ) इति । तस्य सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह—

अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ।
होता॑रं रत्न॒धात॑मम् ॥ १ ॥

अ॒ग्निम् । ई॒ळे॒ । पु॒रःऽहि॑तम् । य॒ज्ञस्य॑ । दे॒वम् । ऋ॒त्विज॑म् । होता॑रम् । र॒त्न॒ऽधात॑मम् ॥

सा० भा०—अग्निनामकं देवम् ईळे स्तौमि । 'ईड स्तुतौ' इति धातुः । डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः । तथा च पठ्यते—'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः । अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्' इति ॥ मन्त्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते । कीदृशमग्निम् । यज्ञस्य पुरोहितम् । यथा राज्ञः पुरोहितस्तदभीष्टं संपादयति, तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति । यद्वा । यज्ञस्य संबन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम् । पुनः कीदृशम् । देवं दानादिगुणयुक्तम् । पुनः कीदृशम् । होतारम् ऋत्विजम् । देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव । तथा च श्रूयते—'अग्निर्वै देवानां होता' ( ऐ० ब्रा० ३.१४ ) इति । पुनरपि कीदृशम् । रत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा । अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति—'अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति, त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवत्यग्निमीळे' ( निरु० ७.१४ ) इति । अस्यायमर्थः । सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वादनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षितम् अतो अनुक्रमेण वक्ष्यामः । तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते । कस्मात्

प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्य 'अग्रणीः' इत्यादिकमुत्तरम्। देवसेनामग्रे स्वयं नयतीत्यग्रणीः। एतदेकमग्निशब्दस्य प्रवृत्तिनिमित्तम्। तथा च ब्राह्मणान्तरम्—'अग्निर्देवानां सेनानीः' इति। एतदेवाभिप्रेत्य बह्वृचा मन्त्रब्राह्मणे आमनन्ति—'अग्निर्मुखं प्रथमो देवतानाम्' (ऐ० ब्रा० १.४) इति मन्त्रः। 'अग्निर्वै देवानामवमः' (ऐ० ब्रा० १.१) इति ब्राह्मणम्। तथा तैत्तिरीयाश्चामनन्ति—'अग्निरग्रे प्रथमो देवतानाम्' (तै० ब्रा० २.४.३३) इति। 'अग्निरवमो देवतानाम्' इति च। वाजसनेयिनस्त्वेवमामनन्ति—'स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नाम' इति। यज्ञेषु अग्निहोत्रेष्टिपशुसोमरूपेषु अग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात् प्रणीयते इति द्वितीयं प्रवृत्तिनिमित्तम्। संनममानः सम्यक् स्वयमेव प्रह्वीभवन् अङ्गं स्वकीयं शरीरं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम्। स्थूलाष्ठीवनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चित् 'अक्नोपनः' इति अग्निशब्दं निर्वक्ति। तत्र न क्नोपयतीत्युक्ते न स्नेहयति, किंतु काष्ठादिकं रूक्षयतीत्युक्तं भवति। शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते। इतः 'इण् गतौ' इति धातुः। अक्तः 'अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु' इति धातुः। दग्धः 'दह भस्मीकरणे' इति धातुः। नीतः 'णीञ् प्रापणे' इति धातुः। अग्निशब्दो हि अकारगकारनिशब्दानपेक्षमाणः एतिधातोरुत्पन्नात् अयनशब्दात् अकारमादत्ते। अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते। यद्वा। दहतिधातुजन्यात् दग्धशब्दात् गकारमादत्ते। नीः इति नयतिधातुः। स च ह्रस्वो भूत्वा परो भवति। ततो धातुत्रयं मिलित्वा अग्निशब्दो भवति। यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः। तस्य अग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिप्रदर्शनायैषा 'अग्निमीळे' इति ऋक् भवतीति। तामेतां ऋचं यास्क एव व्याख्यातवान्—'अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभो रत्नधातमं रमणीयानां धनानां दातृतमम्' (निरु० ७.१५)। अस्यायमर्थः—ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम्। धातूनामनेकार्थत्वमिति न्यायमाश्रित्य याच्ञाध्येषणापूजाः अप्यत्रोचितत्वात् तदर्थतया व्याख्याताः। पुरोहितशब्दो द्वितीयेऽध्याये 'यद्देवापिः शंतनवे पुरोहितः' इत्येताम् ऋचमृचमुदाहृत्य 'पुर एनं दधति' (निरु० २.१२) इति व्याख्यातः। तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन 'पुर एनं दधते' (तै० सं० २.१.२.९) इत्यामनन्ति। देवशब्दो दानदीपनद्योतनानामन्यतममर्थमाचष्टे। यज्ञस्य दाता

दीपयिता द्योतयितायमग्निरित्युक्तं भवति । दीपनद्योतनयोः कार्थत्वेऽप्यस्ति धातुभेदः । यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनात् द्युस्थानो भवति । देवशब्ददेवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया । होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति । और्णवाभनामकस्तु मुनिः जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते । अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम् । रत्नशब्दो द्वितीयाध्याये 'मघम'इत्यादिष्वष्टाविंशतौ धननामसु (नि० २.१०.७) पठितः । रमणीयत्वात् रत्नत्वम् । दधातिधातुरत्र दानार्थवाचीति । तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानम् ॥ अथ व्याकरणप्रक्रियोच्यते । अगिधातोर्गत्यर्थात् 'अङ्गेर्नलोपश्च' ( उ० सू० ४.४९० ) इति औणादिकसूत्रेण निप्रत्ययः । इदित्त्वान्नुमागमेन प्राप्तस्य नकारस्य ( पा० सू० ७.१.५८ ) लोपश्च भवति । अङ्गति स्वर्गं गच्छति हविर्नेतुमित्यग्निः । तत्र 'धातोः' ( पा० सू० ६.१.१६२ ) इति अकार उदात्तः । 'आद्युदात्तश्च' ( पा० सू० ३.१.३ ) इति प्रत्ययगत इकारोऽप्युदात्तः । 'अनुदात्तं पदमेकवर्जम्' (पा० सू० ६.१.१५८) इति द्वयोरन्यतरमुदात्तमवशेष्येतरस्यानुदात्तत्वं प्राप्तम् । तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते । 'सति शिष्टस्वरो बलीयान्' ( पा० वा० ६.१.१५८ ) इति हि न्यायः । ततोऽन्तोदात्तमग्निप्रातिपदिकम् । 'अनुदात्तौ सुप्पितौ' ( पा० सू० ३.१.४ ) इति अम् इत्येतत् द्वितीयैकवचनमनुदात्तम् । तस्य 'अमि पूर्वः' ( पा० सू० ६.१.१०७ ) इति यत् पूर्वरूपं तदुदात्तम् 'एकादेश उदात्तेनोदात्तः' ( पा० सू० ८.२.५ ) इति सूत्रितत्वात् । अग्निशब्दो धातुजन्मेति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या । मतद्वयं यास्केन प्रदर्शितं—'नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च न सर्वाणीति गार्ग्यो वैयाकरणानां चैके' ( निरु० १.१२ ) इति । गार्ग्यस्य मतेऽग्निशब्दस्याखण्डप्रातिपदिकत्वात्—'फिषोऽन्त उदात्तः' ( फि० सू० १ ) इत्यन्तोदात्तत्वम् । पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं कल्पनीया । एतदेवाभिप्रेत्य यास्क आह—'अथ निर्वचनं तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद् वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेव न निर्ब्रूयात्' ( निरु० २.१ ) इति । अस्यायमर्थः—तत्तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्याताम् । स्वर उदात्तादिः । संस्कारो निप्रत्ययादिः । किंच तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्याताम् । शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः । तत्र भवो गुणो गतिरूपोऽर्थः । तेनान्वितौ । तान्यग्न्यादिपदानि तथा, व्याकरणानुसारेण

निर्ब्रूयात्। तच्च निर्वचनमस्माभिः प्रदर्शितम्। अथ पूर्वोक्तवैलक्षण्येन कश्चित् स्वेन विवक्षितोऽर्थो नान्वितः तस्मिन् शब्देऽनुगतो न भवेत्। तस्यैव व्याख्यानम् 'अप्रादेशिके विकारे' इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयते इत्यप्रादेशिकः। एवं सति यः पुमानर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान्। ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा स निर्बन्धः। तदानीं स पुमान् केनचित् वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत, तस्मिन् शब्दे योजयेत्। वृत्तिः क्रिया। तद्रूपेण सामान्यं सादृश्यम्। अस्माभिश्च अग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्य अग्रणीत्वाद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनम्। स्थौलाष्ठीविः अक्षरसाम्यान्निर्वक्ति। अक्नोपनशब्दस्यादौ निषेधार्थम् अकाररूपमक्षरं विद्यते। अग्निशब्दस्याप्यादौ अकारोऽस्ति। तदिदमक्षरसाम्यम्। शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते—दग्धशब्दाग्निशब्दयोर्गकारवर्णेन साम्यम्। सर्वथापि निर्वचनं न त्याज्यमिति। ईळे इत्येतत्पदं कृत्स्नमप्यनुदात्तम्। 'तिङ्ङतिङः' (पा॰ सू॰ ८.१.२८) इति अतिङन्तादग्निशब्दात् परस्य ईळे इत्यस्य तिङन्तस्य निघातविधानात्। पदद्वयसंहिताकाले तु ईकारस्य धातुगतस्य 'उदात्तादनुदात्तस्य स्वरितः' (पा॰ सू॰ ८.४.६६) इति स्वरितत्वम्। तस्मात् ऊर्ध्वभाविन एकारस्य तिङ्प्रत्ययरूपस्य 'स्वरितात्संहितायामनुदात्तानाम्' (पा॰ सू॰ १. २. ३९) इति ऐकश्रुत्यं प्रचयनामकं भवति। पुरःशब्दोऽन्तोदात्तः। 'अयं पुरो भुवः' (तै॰ सं॰ ४. ३. २. १) इत्यत्र तथैवाम्नातत्वात्। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा॰ सू॰ ५. ३. ३९) इति पूर्वशब्दात् असिप्रत्ययः पुरादेशश्च। ततोऽत्र प्रत्ययस्वरः (पा॰ सू॰ ३. १. ३)। धाञो निष्ठायां 'दधातेर्हिः' (पा॰ सू॰ ७. ४. ४२) इत्यादेशे सति प्रत्ययस्वरेणान्तोदात्तो हितशब्दः। तत्र समासान्तोदात्तत्वे (पा॰ सू॰ ६. १. २२३) प्राप्ते तदपवादत्वेन 'तत्पुरुषे तुल्यार्थ॰' (पा॰ सू॰ ६. २. २) इत्यादिना अव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा। 'पुरोऽव्ययम्' (पा॰ सू॰ १. ४. ६७) इति गतिसंज्ञायां 'गतिरनन्तरः' (पा॰ सू॰ ६. २. ४९) इति पूर्वपदप्रकृतिस्वरत्वम्। तत ओकार उदात्तः। अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववत् द्रष्टव्याः। आद्याक्षरस्य संहितायां प्रचयप्राप्तौ (पा॰ सू॰ १. २. ३९) 'उदात्तस्वरितपरस्य सन्नतरः' (पा॰ सू॰ १. २. ४०) इत्यतिनीचोऽनुदात्तः। 'यजयाच॰' (पा॰ सू॰ ३. ३. ९०) इत्यादिना यजतेः नङ्प्रत्यये सति अन्तोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति (पा॰ सू॰ ३. १. ४) पश्चात् स्वरितत्वम्। देवशब्दः पचाद्यजन्तः (पा॰ सू॰ ३. १. १३४)। स च फिट्स्वरेण (फि॰ सू॰ १) प्रत्ययस्वरेण (पा॰ सू॰ ३. १. ३) चित्स्वरेण

( पा० सू० ६. १. १६३ ) वा अन्तोदात्तः । ऋत्विक्शब्दः 'ऋतौ यजति' इति विग्रहे सति 'ऋत्विग्दधृक्०' ( पा० सू० ३. २. ५९ ) इति निपातितः । 'गतिकारकोपपदात्कृत्' ( पा० सू० ६. २. १३९ ) इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । विभक्तिस्वरः पूर्ववत् । होतृशब्दस्तृन्प्रत्ययान्तः ( पा० सू० ३.२.१३५ ) । नित्स्वरेणाद्युदात्तः ( पा० सू० ६. १. १९७ ) । स्वरितप्रचयौ पूर्ववत् । रत्नशब्दो 'नव्विषयस्यानिसन्तस्य' ( फि० सू० २६ ) इत्याद्युदात्तः । तथा चाम्नायते— 'रत्नं धाता' इति । रत्नानि दधातीति विग्रहः । समासत्वादन्तोदात्तो रत्नधाशब्दः । यद्वा कृदुत्तरपदप्रकृतिस्वरः । तमप्प्रत्ययस्य ( पा० सू० ५. ३. ५५ ) पित्स्वरेणानुदात्ते सति ( पा० सू० ३. १. ४ ) स्वरितप्रचयौ । संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वम् । 'वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः । विज्ञातं वेदगाम्भीर्यमथ संक्षिप्य वर्ण्यते' ॥

शब्दा०—अग्निम् = अग्नि देवता की, ईळे = स्तुति करता हूँ, पुरोहितम् = यज्ञ में सर्वप्रथम आधान किये गये, यज्ञस्य = यज्ञ के, देवम् = प्रकाशक, ऋत्विजम् = ऋतुओं के अनुसार यज्ञ संपादित करनेवाले, होतारम् = देवताओं का आह्वान करनेवाले, रत्नधातमम् = धन प्रदान करनेवालों में सर्वश्रेष्ठ ।

अन्वयः—( अहम् ) पुरोहितं यज्ञस्य देवम् ऋत्विजं होतारं रत्नधातमम् अग्निम् ईळे ।

हि० अ०—( यज्ञ में ) सर्वप्रथम आधान किये जानेवाले, यज्ञ को प्रकाशित करनेवाले, ऋतुओं के अनुसार यज्ञ संपादित करनेवाले, ( देवताओं का ) आह्वान करनेवाले ( तथा ) धन प्रदान करनेवालों में सर्वश्रेष्ठ अग्निदेवता की ( मैं ) स्तुति करता हूँ ।

***Trans.***—I laud Agni, the first-placed, the illuminator of the sacrifice, the performer of the seasonal rites, the invoker ( of the gods ) and the excellent bestower of wealth.

***Notes***—ईळे—√*id* 'to laud', Ātm. pres. 1st sing. 'ड़' coming between two vowels is pronounced as ळ. This sound is not preserved in the Classical Sanskrit, but is found in Marāthi though in different context. It is equivalent to Hindi ड़. Some pronounce it as ल which is not correct according to the Ṛg. Prāt. ( I. 52 ). The verb is unaccented because

it does not begin a sentence or is it in the beginning of a pāda. Svarita on ई in the Saṃhitāpāṭha is due to preceding Udātta. पुरोहितम्—The commentators explain this word in two ways. Firstly, they take it as a technical term for the priest who conducts the sacrifices of the sacrificer. Secondly, they take it as a derivative word. Agni is called पुरोहित because he is placed first in the sacrifices. As such the word is derived from पुरः + √धा + क्त ; when the second member of a compound ends in क्त and the first member is an avyaya, the first member bears the Udātta accent. यज्ञस्य is to be taken with देवम् . ऋत्विजम्—This word, too, has been explained by the commentators in two ways; firstly, by taking it as a technical term for the ministrants of the sacrifice, and secondly as a derivative word. Agni is called ऋत्विज् because he performs the seasonal sacrifices throughout the year. It is derived from ऋतु + √यज् to sacrifice'. Though etymologically a compound, it is not analysed in the pada-text. होतारम्—This word, too, has been explained in two ways. Firstly, it is a technical term for the priest who recites the Ṛk-mantras in the sacrifice, and secondly, as a derivative word it means the invoker of the gods. Agni is the invoker of gods. The word होता is derived from √*hū* 'to call' with the suffix तृन् . रत्नधातमम्—Tatpuruṣa compd. accented on the second member. The suffix तमप् is here regarded as forming a unit with धा (giver); hence, not separated by avagraha in the pada-text. In the ṚV रत्न means wealth.

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवाँ एह वक्षति ॥ २ ॥

अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत । सः । देवान् । आ । इह । वक्षति ॥

सा० भा०—अयम् अग्निः पूर्वेभिः पुरातनैर्भृग्वङ्गिरःप्रभृतिभिः ऋषिभिः ईड्यः स्तुत्यः, नूतनैः उत इदानींतनैरस्माभिरपि स्तुत्यः। सः अग्निः स्तुतः सन् इह यज्ञे देवान् हविर्भुजः आ वक्षति। 'वह प्रापणे' इति धातुः। आवहतु इत्यर्थः॥ पूर्वेभिरित्यत्र 'बहुलं छन्दसि' (पा० सू० ७.१.१०) इति भिस ऐसादेशाभावः। 'पूर्व पर्व अर्व पूरणे' इति धातुः। पूर्वतिधातोः अन्प्रत्यय औणादिकः। इन्प्रत्ययान्त ऋषिशब्दः 'ऋष्यन्धक०' (पा० सू० ४.१.११४) इति निपातनात् लघूपधगुणाभावः (पा० सू० ७.३.८६)। कित्प्रत्ययो वात्र ज्ञेयः (उ० सू० ४.५५९)। तौ शब्दौ नित्स्वरेणाद्युदात्तौ। ईड्यशब्दस्य ण्यत्-प्रत्ययान्तत्वात् (पा० सू० ३.१.१२४) 'तित्स्वरितम्' (पा० सू० ६.१.१८५) इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन 'ईडवन्द०' (पा० सू० ६.१.२१४) इत्यादिनाद्युदात्तत्वम्। 'नवस्य नू त्नप्तनखाश्च' (पा० वा० ५.४.३०) इति वार्तिकेन नवशब्दस्य नू इत्यादेशः तनन्प्रत्ययश्च महावार्तिके विहितः। ततो नित्स्वरेणाद्युदात्तः। अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः। उत-शब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः। 'उच्चावचेष्वर्थेषु निपतन्ति' इति निपातत्वम्। तर्हि 'निपाता आद्युदात्ताः' (फि० सू० ८०) इत्युकारस्योदात्तः प्राप्त इति चेत्, न। प्रातःशब्दवदन्तोदा-त्तत्वात्। यथा प्रातःशब्दोऽन्तोदात्तत्वेनैव स्वरादिषु (पा० सू० १.१.३७) पठितः, एवमुतशब्दस्यापि पाठो द्रष्टव्यः, स्वरादेराकृतिगणत्वात्। यद्वा 'एवा-दीनामन्तः' (फि. सू. ८२) इत्यन्तोदात्तः। स इत्यत्र फिट्स्वरः। देवशब्दः पूर्ववत्। देवान् इत्यस्य नकारस्य संहितायां 'दीर्घादटि०' (पा० सू० ८.३.९) इति रुत्वम्। 'अत्रानुनासिकः०' (पा० सू० ८.३.२) इत्यनुवृत्तौ 'आतोऽटि नित्यम्' (पा० सू० ८.३.३) इत्याकारः सानुनासिकः। 'भोभगो०' (पा० सू० ८.३.१७) इति रोर्यकारः। स च 'लोपः शाकल्यस्य' (पा० सू० ८.३.१९) इति लुप्यते। तस्यासिद्धत्वात् (पा० सू० ८.२.१) न पुनः संधिकार्यम्। आङो निपातत्वादाद्युदात्तत्वम्। इदमो हप्रत्यये सति निष्पन्नत्वात् (पा० सू० ५.३.११) इहशब्दे प्रत्ययस्वरः। वहति धातोर्लोडर्थे छान्दसो लट्। तस्य स्यप्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः। यद्वा। लेटि 'सिब्बहुलम्०' (पा० सू० ३.१.३४) इति सिप्प्रत्ययः। 'लेटोऽडाटौ' (पा० सू० ३.४.९४) इत्यडागमश्च। ततो वक्षतीति संपद्यते। तस्य तिङन्तत्वान्निघातः। संहिता-स्वराः पूर्ववत्॥

शब्दा०—अग्निः = अग्निदेवता, पूर्वेभिः = प्राचीन, ऋषिभिः = मन्त्रद्रष्टा ऋषियों के द्वारा, ईड्यः = स्तुत्य है, नूतनैः = अर्वाचीन, उत = और, सः = वह

देवान् = देवताओं को, इह = यहाँ यज्ञ में, आ वक्षति = लावे।

अन्वयः— अग्निः पूर्वेभिः ऋषिभिः उत नूतनैः ( ऋषिभिः ) ईड्यः। सः देवान् इह आ वक्षति।

हि० अ०—( जो ) अग्नि प्राचीन तथा अर्वाचीन ऋषियों के द्वारा स्तुत्य है, वह देवताओं को यहाँ यज्ञ में लावे।

*Trans* — Agni ( who ) is magnified by ancient and modern seers; may he bring the gods here (to the sacrifice).

*Notes*—पूर्वेभिः ऋषिभिः—The declensional endings –भ्याम्, –भिस् and –भ्यस् are treated as final members of compounds in the pada-text, when there is no modification in the original stem before these endings. Hence, in ऋषिभिः the termination –भिस् is separated from the stem ऋषि by avagraha in the pada-text. But when the final syllable of the stem is lengthened or it undergoes any qualitative modification, these terminations are not separated from the stem by avagraha. Hence, पूर्वेभिः is not analysed in the pada-text. ईड्यः—From √*id* 'to laud' with the suffix ण्यत्. नूतनैः—It is formed from नव with the suffix तन the former being changed into नू. देवाँ एह—When a vowel follows a word ending in-आन्, the final न् is dropped and the preceding आ is nasalized. वक्षति—√*vah* 'to carry', s—aorist, subju. 3rd sing. The verb of the principal clause not coming in the beginning of a pāda is unaccented ( तिङ्ङतिङः— Pāṇ. VIII. 1.28 ). In this mantra we find a reference to old and new generations of seers of the ṚV.

अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे।
य॒शसं॑ वी॒रव॑त्तमम् ॥ ३ ॥

अ॒ग्निना॑। र॒यिम्। अ॒श्न॒व॒त्। पोष॑म्। ए॒व। दि॒वेऽदि॑वे।
य॒शस॑म्। वी॒रव॑त्ऽतमम् ॥

सा० भा०—योऽयं होता स्तुत्योऽग्निस्तेन अग्निना निमित्तभूतेन यजमानः रयिं धनम् अश्नवत् प्राप्नोति। कीदृशं रयिम्? दिवेदिवे पोषम् एव प्रतिदिनं पुष्यमाणतया वर्धमानमेव, न तु कदाचिदपि क्षीयमाणम्। यशसं दानादिना यशोयुक्तं वीरवत्तमम् अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्। सति हि धने पुरुषाः संपद्यन्ते। रयिशब्दो 'मघम्' इत्यादिधननामसु (नि० २.१०.८) पठितः। तत्र फिट्स्वरः। अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्। 'इतश्च लोपः०' (पा० सू० ३.४.९७) इति इकारलोपः। 'लेटोऽडाटौ' (पा० सू० ३.४.९४) इत्यडागमः। ततः 'अश्नवत्' इति भवति। तस्य निघातः। घञन्तत्वात् (पा० सू० ६.१.१९७) पोषशब्द आद्युदात्तः। एवशब्दस्य निपातत्वेऽपि 'एवादीनामन्तः' (फि० सू० ८२) इत्यन्तोदात्तत्वम्। वकारान्तात् दिवशब्दात् परस्याः सप्तम्याः 'सुपां सुलुक्०' (पा० सू० ७.१.३९) इत्यादिना शेआदेशे सति 'ऊडिदंपदाद्य०' ऊडिदंपदात्०' (पा० सू० ६.१.१६८) इत्यादिना 'ऊडिदंपदात्०' (पा० सू० ६.१.१७१) इत्यादिना वा तस्योदात्तत्वम्। 'नित्यवीप्सयोः' (पा० सू० ८.१.४) इति द्विर्भावे सति उत्तरभागस्य 'अनुदात्तं च' (पा० सू० ८.१.३) इत्यनुदात्तत्वम्। यशोऽस्यास्तीति विग्रहे सति 'अर्शआदिभ्योऽच्' (पा० सू० ५.२.१२७) इति अच्प्रत्ययः। चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम्। फिट्स्वरेणान्तोदात्तात् वीरशब्दात् उत्तरयोर्मतुप्तमपोः पित्त्वादनुदात्तत्वम्। 'ह्रस्वनुड्भ्याम्०' (पा० सू० ६.१.१७६) इति तु न सावर्णान्तत्वात्। 'न गोश्वन्०' (पा० सू० ६.१.१८२) इति प्रतिषेधः॥

शब्दा०—अग्निना = अग्नि के द्वारा, रयिम् = धन, अश्नवत् = प्राप्त करे, पोषम् = नित्यवर्धनशील अथवा पुष्टि प्रदान करनेवाला, एव = ही, दिवेदिवे = प्रतिदिन, यशसम् = कीर्तिदायक, वीरवत्तमम् = अतिशय वीर पुत्रों से युक्त।

अन्वयः—(नरः) अग्निना एव पोषं यशसं वीरवत्तमं रयिं दिवे दिवे अश्नवत्।

हि० अ०—अग्नि के द्वारा (मनुष्य) प्रतिदिन नित्य-वर्धनशील, कीर्तिदायक, एवं अतिशय वीर पुत्रों से युक्त धन प्राप्त करे।

*Trans.*—Through Agni may one day by day obtain wealth, ever-increasing, fame-giving and most abounding in heroes.

*Notes*—अश्नवत्—√*aṁś* 'to attain', pres. subju. 3rd sing. unaccented because it is in the principal clause and does

not begin a sentence or pāda. पोषम्—From √puṣ 'to thrive' with the suffix घञ्. Skandasvāmin and Veṅkaṭa Mādhava render it as 'पुष्टिम्' Macdonell, too, takes it as a co-ordinative noun. Sāyaṇa, however, takes it as an adjective of रयिम्. दिवेदिवे—Iterative compd. always accented on the first member. Both the members are separated by avagraha in the pada-text. यशसम्—Skandasvāmin and Veṅkaṭa Mādhava take it as a co-ordinative word and render as कीर्तिम्. Sāyaṇa explains by taking it as an adj. of रयिम्. Macdonell renders it as 'glorious'. Its adjectival sense is clear from the accent of the word. Had it not been adj. it would have had the Udātta accent on the first syllable. वीरवत्तमम्—Here मतुप् and तमप् are compounded with वीर. But मतुप् with वीर being regarded as one unit, is treated as the first member of the compd. Hence, वीरवत् is separated from तमम् by avagraha in the pada-text.

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।
स इद्देवेषु गच्छति ॥ ४ ॥

अग्ने । यम् । यज्ञम् । अध्वरम् । विश्वतः । परिऽभूः । असि ।
सः । इत् । देवेषु । गच्छति ॥

सा० भा०—हे अग्ने त्व य यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवान् असि सः इत् स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गे गच्छति । प्राच्यादिचतुर्दिगन्तेषु आहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेषु अग्निरस्ति । परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता । कीदृशं यज्ञम् । अध्वरं हिंसारहितम् । न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति ॥ अग्निशब्दस्य षाष्ठिकम् ( पा० सू० ६.१.१९८ ) आमन्त्रितायुदात्तत्वम् । न विद्यते ध्वरोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' (पा० सू० ६.२.१७२) इत्यन्तोदात्तत्वम् । विश्वतः इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य 'लिति' (पा० सू० ६.१.१९३) इत्युदात्तत्वम् । परिभूरित्यत्र अव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते ( पा० सू० ६.२.२ ) तदपवादत्वेन

कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा० सू० ६.२.१३९ )। असि इति तिङन्तस्य 'यद्वृत्तान्नित्यम्' ( पा० सू० ८.१.६६ ) इति निघाताभावः ॥

शब्दा०—अग्ने = हे अग्नि, यम् = जिस, यज्ञम् = यज्ञ को, अध्वरम् = हिंसारहित, विश्वतः = चारों तरफ से, परिभूः = व्याप्त करनेवाले, असि = हो, सः = वह, इत् = ही, देवेषु = देवताओं में, गच्छति = पहुँचता है ।

अन्वयः—( हे ) अग्ने यम् अध्वरं यज्ञं विश्वतः परिभूः असि, सः इत् देवेषु गच्छति ।

हि० अ०—हे अग्नि, जिस हिंसारहित यज्ञ को ( तुम ) चारों तरफ से व्याप्त करनेवाले ( होते ) हो, वही ( यज्ञ ) देवताओं में पहुँचता है ।

*Trans.*—O Agni, the uninjured sacrifice, whose encompasser on every side thou art, verily goes to the gods.

*Notes*—अग्ने—Vocative, coming in the beginning of a pāda, always bears the Udātta on its first syllable ( आमन्त्रितस्य च—Pāṇ. VI. 1.198 ). यज्ञम् अध्वरम्—The commentators explain अध्वरम् as an adj. of यज्ञम्. According to Sāyaṇa it is a Bahuvrīhi compd.; hence, accented on the final syllable of the second member. Macdonell takes the two words as co-ordinatives. According to him यज्ञ means worship and अध्वर means sacrifice. अध्वरम् is derived from अ + √ध्वृ 'to kill' ; a sacrifice is so called because it is not injured or destroyed by the demons. असि—√*as* 'to be', pres. 2nd sing. ; accented because it is preceded by यम् ( यद्वृत्तान्नित्यम्—Pāṇ. VIII. 1.66 ) गच्छति—√*gam* 'to go', pres. 3rd sing. unaccented.

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरा गमत् ॥ ५ ॥

अग्निः । होता । कविऽक्रतुः । सत्यः । चित्रश्रवःऽतमः । देवः । देवेभिः । आ । गमत् ॥

सा० भा०—अयम् अग्निः देवः अन्यैर्देवैर्हविर्भोजिभिः सह आ गमत् अस्मिन् यज्ञे समागच्छतु । कीदृशोऽग्निः । होता होमनिष्पादकः । कविक्रतुः ।

कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम। ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः। चित्रश्रवस्तमः। श्रूयते इति श्रवो कीर्तिः। अतिशयेन विविधकीर्तियुक्तः॥ कविक्रतुः चित्रश्रवस्तमः इत्यत्रोभयत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् ( पा० सू० ६.२.१ )। सत्सु साधुः सत्यः 'सत्यादश्पथे' ( पा० सू० ५.४.६६ ) इत्यत्रान्तोदात्तो हरदत्तेन निपातितः। लोडन्तस्य गच्छतु इति शब्दस्य छत्वाभावः। उकारलोपश्छान्दसः। ततो रूपं गमत् इति भवति। स्पष्टमन्यत्॥

शब्दा०—अग्निः = अग्निदेवता, होता = देवताओं का आह्वान करनेवाला, कविक्रतुः = अप्रतिहत किंवा सर्वक्रान्तप्रज्ञावाला, अर्थात् जिसकी प्रज्ञा सब कुछ जाननेवाली हो, सत्यः = सत्यस्वरूप, चित्रश्रवस्तमः = अतिशय रूप से अद्भुत कीर्ति-सम्पन्न, देवः = प्रकाशक, देवेभिः = देवताओ के साथ, आ गमत् = आवे।

अन्वयः—अग्निः होता कविक्रतुः सत्यः चित्रश्रवस्तमः। ( सः ) देवः देवेभिः ( अस्मिन् यज्ञे ) आ गमत्।

हि० अ०—( देवताओं का ) आह्वान करनेवाला, सर्वक्रान्त प्रज्ञावाला, सत्यस्वरूप, अतिशय रूप से अद्भुत कीर्ति-सम्पन्न तथा प्रकाशक अग्नि देवताओं के साथ ( यहाँ यज्ञ में ) आवे।

*Trans.*—May Agni, the invoker, of all-knowing wisdom, the true, of excellent wonderful glory, the illuminator, come ( to our sacrifice ) with the gods.

*Notes*—होता—√*hū* 'to call' with the suffix तृन्; the suffix being नित् it has Udātta on the first syllable ( ञ्नित्यादिर्नित्यम्—Pāṇ. VI. 1.97 ). कविक्रतु—Bahuvrīhi compd. accented on the first member and analysed in the pada-text. The commentators explain it as one whose wisdom is all-pervading. क्रतु is formed from √*kṛ* 'to do' with the suffix कतु. According to Macdonell कविक्रतुः means 'of wise intelligence'. चित्रश्रवस्तमः—Bahuvrīhi compd. accented on the first member; the suffix तमप् is here regarded as forming a unit, hence separated by avagraha in the pada-text. गमत्—√*gam* 'to go', root-aorist, subju. 3rd sing., unaccented because it is not in the beginning of a pāda.

यदुङ्ग दाशुषे त्वमग्ने भुद्रं करिष्यसि ।
तवेत्तत्सुत्यमङ्गिरः ॥ ६ ॥

यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भुद्रम् । करिष्यसि । तव ।
इत् । तत् । सुत्यम् । अङ्गिरः ॥

सा० भा०—अङ्ग इत्यभिमुखीकरणार्थो निपातः । अङ्ग अग्ने हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यत् भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तत् भद्रं तव, इत् तवैव । सुखहेतुरिति शेषः । हे अङ्गिरः अग्ने एतच्च सत्यं न त्वत्र विसंवादोऽस्ति । यजमानस्य वित्तादिसंपत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति । भद्रशब्दार्थे शाट्यायनिनः समामनन्ति—'यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रम्' इति ॥ अङ्गशब्दस्य निपातत्वेऽपि अभ्यादित्वात् ( फि० सू० ८१ ) अन्तोदात्तत्वम् । 'दाश्वान्साह्वान्०' (पा० सू० ६.१.१२) इति सूत्रेण 'दाशृ दाने' इति धातोः क्वसुप्रत्ययो निपातितः । तत्र प्रत्ययस्वरः ( पा० सू० ३.१.३ ) । आमन्त्रितस्य अग्निशब्दस्य पदात्परत्वेन आष्टमिकानुदात्तत्वं ( पा० ८.१.१९ ) न शङ्कनीयम्, '०अपादादौ' ( पा० सू० ८.१.१८ ) इति पर्युदस्तत्वात् । ततः षाष्ठिकम् ( पा० सू० ६.१.१९८ ) आद्युदात्तत्वमेव । भद्रशब्दस्य नब्विषयत्वेन ( फि० सू० २६ ) आद्युदात्तत्वप्रसक्तावपि 'भदि कल्याणे' इति धातोरुपरि रक्प्रत्ययेन निपातनादन्तोदात्तत्वम् । अस्मिन् वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदिहन्त०' (पा० सू० ८.१.३०) इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण सति शिष्टेन करिष्यसिशब्द उपान्त्योदात्तः । तवेत्यत्र 'युष्मदस्मदोर्ङसि' ( पा० सू० ६.१.२११ ) इत्याद्युदात्तत्वम् । 'अङ्गिरा अङ्गाराः' ( निरु० ३.१७) इति यास्कः । ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति—'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' ( ऐ० ब्रा० ३.३४ ) इति । तस्मात् अङ्गिरोनामकमुनिकारणत्वात् अङ्गाररूपस्याग्नेरङ्गिरस्त्वम् । अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम् ॥

शब्दा०—यत् = जो, अङ्ग = अभिमुख अर्थात् सम्मुख करने के अर्थ में प्रयुक्त निपात, दाशुषे = हविप्रदान करनेवाले यजमान के लिये, त्वम् = तुम, अग्ने = हे अग्नि, भद्रम् = कल्याण या सुख, करिष्यसि = करोगे, तव = तुम्हारा, इत् = ही, तत् = वह, सत्यम् = यह सत्य है, अङ्गिरः = हे अङ्गिरस् नामक ऋषि के कारणभूत अग्नि, अथवा हे अङ्गारों में उत्पन्न होनेवाले अग्नि ।

अन्वयः—(हे) अग्ने, दाशुषे यद् अङ्ग भद्रं करिष्यसि, (हे) अङ्गिरः, तत् तव इत् (इति एतत्) सत्यम्।

हि० अ०—हे अग्नि, (हवि) प्रदान करनेवाले (यजमान) के लिये उसके सम्मुख तुम जो कुछ सुख (प्रदान) करोगे, हे अङ्गारों में उत्पन्न होनेवाले अग्नि, वह (सब) तुम्हारा ही है, यह (बात) सत्य है।

*Trans.*—O Agni, whatever good thou wilt do for the oblation-giving worshipper, that would be of thine, O Angiras, it is true.

*Notes*—अङ्ग—A particle used in the sense of 'quick' (Skandasvāmin, Veṅkaṭa Mādhava) or 'towards' (Sāyaṇa). Oldenberg, Griffith and Macdonell take it as an emphatic particle. It emphasizes the preceding word, and expresses the action especially or exclusively applies to that word, =*just, only, else*. दाशुषे—Dative, sing. of दाश्वस् which is formed from √*dāś* 'to give' or 'worship' with the suffix क्वसु. When the suffix क्वसु is added to a root the latter is reduplicated. But it is an exception to that rule. In the weak cases व becomes उ by samprasāraṇa. अग्ने—Though the pādas forming a hemistich (अर्धर्च) constitute a metrical unit from the point of view of sandhi and marking of the accent, the second pāda is, however, syntactically separated from the first inasmuch as it is treated as a new sentence, a vocative or a verb at its beginning being always accented on the first syllable. Hence, अग्ने is accented (आमन्त्रितस्य च—Pāṇ. VI. 1.198) करिष्यसि—√*kṛ* 'to do, fu. 2nd sing., accented because syntactically connected with यत् (निपातैर्यद्यदिहन्त०—Pāṇ. VIII. 1.30) अङ्गिरः—Vocative, unaccented because not coming in the beginning of the pāda.

उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम्।
नमो॒ भर॑न्त॒ एम॑सि ॥ ७ ॥

उप॑ । त्वा॒ । अ॒ग्ने॒ । दि॒वेऽदि॑वे । दोषा॑ऽवस्तः । धि॒या । व॒यम् । नमः॑ । भर॑न्तः । आ । इ॒म॒सि॒ ॥

सा० भा०—हे अग्ने वयम् अनुष्ठातारः दिवेदिवे प्रतिदिनं दोषावस्तः रात्रावहनि च धिया बुद्धया नमः भरन्तः नमस्कारं संपादयन्तः उप समीपे त्वा एमसि त्वामागच्छामः ॥ उपशब्दस्य निपातस्वरः ( फि० सू० ८० ) । 'त्वामौ द्वितीयायाः' ( पा० सू० ८. १. २३ ) इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः । दोषाशब्दो रात्रिवाची । वस्तर् इति अहर्वाची । द्वन्द्वसमासे कार्तकौजपादित्वात् ( पा० सू० ६. २. ३७ ) आद्युदात्तः । 'सावेकाचः०' ( पा० सू० ६. १. १६८ ) इति धियो विभक्तिरुदात्ता । नम इति निपातः । भरन्त इत्यत्र शपः ( पा० सू० ३. १. ६८ ) पित्वात् शतुर्लसार्वधातुकत्वाच्च अनुदात्तत्वे सति ( पा० सू० ६. १. १८६ ) धातुस्वरः शिष्यते । इमसि इत्यत्र 'इदन्तो मसिः' ( पा० सू० ७. १. ४६ ) इत्यादेशो निघातश्च ।

शब्दा०—उप = समीप, त्वा = तुम्हारे, अग्ने = हे अग्नि, दिवेदिवे = प्रतिदिन, दोषावस्तः = हे अन्धकार को दूर करनेवाले, धिया = स्तुति, बुद्धि अथवा कर्म के अनुसार, वयम् = हमलोग, नमः = नमस्कार या स्तुति, भरन्तः = करते हुये, आ इमसि = आते हैं ।

अन्वय :—( हे ) दोषावस्तर् अग्ने, वयं धिया नमः भरन्तः दिवेदिवे उप त्वा आ इमसि ।

हि० अ०—हे अन्धकार को दूर करनेवाले अग्नि, प्रतिदिन हमलोग ( अपनी ) बुद्धि के अनुसार ( स्तुतिरूप ) नमस्कार करते हुये तुम्हारे पास आते हैं ।

*Trans.*—O Agni, the dispeller of darkness, we according to our wisdom bringing homage come to thee day by day.

*Notes*—अ॒ग्ने–Vocative in the middle of a pāda; hence, unaccented. दि॒वेदि॑वे–Vide Ṛv. 1.1.3. दोषा॑वस्तर्–The word has been interpreted by scholars variously. Skandasvāmin takes it as a vocative, while Veṅkaṭa Mādhava and Sāyaṇa as an adverb. According to Sāyaṇa दोषावस्तः means day and night. Max Müller, Oldenberg, Griffith and Macdonell take it as a vocative and accordingly explain it as 'O illuminer of

darkness.' As a vocative coming in the beginning of the pada, it is accented on the first syllable. भरन्तः–Pres. part. from √bhṛ 'to bear' with the suffix शतृ. इमसि–√i 'to go'. pres. 1st plu. In the Vedic language the ending मसि is more common than मस् ( इदन्तो मसिः–Pāṇ. VII. 1,4.6 ).

राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विम् ।
वर्ध॑मानं॒ स्वे दमे॑ ॥ ८ ॥

राज॑न्तम् । अ॒ध्व॒राणा॑म् । गो॒पाम् । ऋ॒तस्य॑ । दीदि॑विम् ।
वर्ध॑मानम् । स्वे । दमे॑ ॥

सा॰ भा॰—पूर्वमन्त्रे त्वामुपैम इत्यग्निमुद्दिश्योक्तम् । कीदृशं त्वाम् । राजन्तं दीप्यमानम् अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकम् ऋतस्य सत्यस्यावश्यंभाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम् । आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते । स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिः वर्धमानम् ॥ राजन्तं वर्धमानमित्यत्रोभयत्र पूर्ववत् धातुस्वरः शिष्यते । दीदिविशब्दस्य 'अभ्यस्तानामादिः' ( पा॰ सू॰ ६.१.१८९ ) इत्याद्युदात्तत्वम् । दमशब्दो वृषादित्वात् ( पा॰ सू॰ ६.१.२०३ ) आद्युदात्तः ॥

शब्दा॰—राजन्तम् = शासन करनेवाले, अध्वराणाम् = हिंसारहित यज्ञों के, गोपाम् = संरक्षक, ऋतस्य = शाश्वत नियम के, दीदिविम् = अत्यन्त प्रकाशमान, वर्धमानम् = बढ़नेवाले, स्वे = अपने, दमे = घर, अर्थात् यज्ञशाला में ।

अन्वयः—राजन्तम् अध्वराणाम्, ऋतस्य गोपाम्, दीदिविम् स्वे दमे वर्धमानम् ( उप त्वा आ इमसि ) ।

हि॰ अ॰—हिंसारहित यज्ञों के शासक, नियम के संरक्षक, अत्यन्त प्रकाशमान तथा अपने घर ( यज्ञशाला ) में ( नित्य ) बढ़नेवाले ( अग्नि के पास हम प्रतिदिन आते हैं ) ।

*Trans.*—( O Agni, to thee ) ruling over the uninjured sacrifices, the guardian of eternal order, the shining one, growing in thine own house ( i.e. the sacrificial altar ).

*Notes*—राजन्तम्-√*rāj* 'to rule' with the suffix शतृ. अध्वराणाम्-See अध्वर ( Ṛv. I. 1.4 ). गोपाम्-It is derived from √*gup* 'to protect' with the suffix अच्. The suffix being चित् the Udātta is on the final syllable. According to the regular grammatical construction, it should be गोपम् like देवम्. Such irregular forms are not uncommon in the Ṛv. ऋतस्य-The word has been interpreted variously by the commentators. According to them it means sacrifice, water, truth and so on. Really speaking ऋत has a history of its own for the development of its various senses. In the first stage it was used as a term conveying the sense of nature. It is derived from √*ṛ* 'to go'. Every phenomenon of nature is characterised as moving constantly. The movement which nature undergoes is not irregular. Thus, in the second stage ऋत conveyed the sense of regularity or order. The regularity found in the realm of nature happened to be found in the worship of gods at the sacrifices. Hence, the name ऋत to the sacrifice. In the sacrifices some rules of morality were strictly and necessarily observed by the priests as well as the sacrificer. Thus, now it conveyed the sense of morality and righteousness, its opposite sense being conveyed by अनृत ( See-B. B. Chaubey: 'Treatment of Nature in the Ṛgveda', pp 3–15 ). दीदिविम्—It is derived from √*dī* 'to shine' with the suffix क्विन्. The root has been reduplicated ; hence, Udātta on the first syllable ( अभ्यस्तानामादिः—Pāṇ. VI. 1.189 ). वर्धमानम्—From √*vṛdh* 'to grow' with the suffix शानच् ; when शानच् is added to the Ātm. root the latter retains the Udātta. स्वे—This pronoun referring to all three persons was used in the Ṛv. दमे—This word has disappeared in Sanskrit, but common in the Ṛv. Its Latin equivalent is *domu-s*. This mantra has no verb; therefore, it should be explained in continuation with the preceding mantra.

स नः पितेव सूनवेऽग्ने सूपायनो भव।
सचस्वा नः स्वस्तये ॥ ९ ॥

सः। नः। पिताऽइव। सूनवे। अग्ने। सुऽउपायनः। भव। सचस्व। नः। स्वस्तये ॥

सा० भा०—हे अग्ने सः त्वं नः अस्मदर्थे सूपायनः शोभनप्राप्तियुक्तः भव। तथा नः अस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव। तत्रोभयत्र दृष्टान्तः। यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत् ॥ अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वम्०' (पा० सू० ८. १. १८), इत्यनुदात्तत्वम्। 'चादयोऽनुदात्ताः' (फि० सू० ८४) इति इवशब्दोऽनुदात्तः। 'इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' (पा० वा० २. ४. ७१) इति समस्तः पितेवेति शब्दो मध्योदात्तः। शोभनमुपायनं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' (पा० सू० ६. २. १७२) इत्यन्तोदात्तत्वम्। सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः। लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ॥

शब्दा०—सः = पूर्वोक्त गुणों से युक्त वह अग्नि, नः = हमारे लिये, पिताऽइव = पिता के समान, सूनवे = पुत्र के लिये, अग्ने = हे अग्नि, सुऽउपायनः = अच्छी प्रकार से, अर्थात् आसानी से पहुँचने योग्य, भव = होवो, सचस्व = साथ होवो, नः = हमारे, स्वस्तये = कल्याण के लिये।

अन्वयः—(हे) अग्ने, सः (त्वम्) सूनवे पिताऽइव नः सुऽउपायनः भव। (अग्ने,) नः स्वस्तये सचस्व।

हि० अ०—(पूर्वोक्त गुणसम्पन्न) वह (तुम) हे अग्नि, हमारे लिये आसानी से पहुँच के योग्य होवो, जिस प्रकार पिता (अपने) पुत्र के लिये होता है। (हे अग्नि) हमारे कल्याण के लिये (तुम) हमारे साथ होवो।

***Trans.***—Thou as such, O Agni, be easy of access to us as a father to his son; abide with us for our well-being.

*Notes*—सः–Here it is used in the sense of ***as such.*** नः—The doublets of अस्मद् and युष्मद् are always unaccented. Hence, नः is unaccented. पितेव—इव is always regarded as forming a compd. with the preceding word which in no case loses its inflections before इव and retains the natural accent

(इवेन नित्य समासः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्—Vārt. on Pān. II.4.71). In the pada-text it is always separated by avagraha. सूनवेऽग्ने—When ए or ओ occurs at the end of a pāda the following अ is absorbed into the preceding ए or ओ. However, the absorption of following अ into preceding ए or ओ also takes place when the preceding pada is within the pāda, under certain circumstances which have been laid down by the Ṛg. prāt. ( II. 35–48 ). This sandhi is known as Abhinihita in the Prātiśākhyas and Śikṣās. सूपायनः—Bahuvrīhi compd. accented on the final syllable of the second member ( नञ्सुभ्याम्—Pāṇ. VI. 2. 172 ). It is analysed in the pada-text. भव—√*bhū* 'to be'. impv. 2nd sing. unaccented. सचस्व—√*sac* 'to accompany', impv. 2nd sing. accented because it begins the pāda. स्वस्तये—It is pronounced as सु-अस्तये but not analysed in the pada-text, because अस्ति does not occur as an independent nominal stem. A very tender and delicate feeling of the poet towards Agni may be seen here in the simile पितेव सूनवे.

# SAVITṚ

'ह्वयाम्यग्निम्' इत्येकादशर्चं पञ्चमं सूक्तम्। हिरण्यस्तूप ऋषिः। आद्या नवमी च जगतीच्छन्दस्के। शिष्टास्त्रिष्टुभः। कृत्स्नस्य सूक्तस्य सविता देवता। आद्यायाः 'ह्वयाम्यग्निम्' इत्यस्या अग्निमित्रावरुणरात्रिसवित्राख्या लिङ्गोक्तदेवताः। तथा चानुक्रान्तं—'ह्वयाम्येकादश सावित्रं नवमी जगत्याद्या च लिङ्गोक्तदैवतपादास्त्वयः' इति। अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्रे इदं सूक्तं सावित्रं निविद्धानम्। 'तृतीयस्य त्र्यर्यमा' इति खण्डे सूत्रितं—'ह्वयाम्यग्निमस्य मे द्यावापृथिवी इति तिस्रः' (आश्व श्रौ० ७.७) इति॥

ह्वया॑म्य॒ग्निं प्र॑थ॒मं स्व॒स्तये॒
ह्वया॑मि मि॒त्रावरु॑णावि॒हाव॑से।
ह्वया॑मि॒ रात्रीं॒ जग॑तो नि॒वेश॑नीं॒
ह्वया॑मि दे॒वं स॑वि॒तार॑मू॒तये॑॥ १॥

ह्वया॑मि। अ॒ग्निम्। प्र॒थ॒मम्। स्व॒स्तये॑। ह्वया॑मि। मि॒त्रावरु॑णौ। इ॒ह। अव॑से॥ ह्वया॑मि। रात्री॑म्। जग॑तः। नि॒ऽवेश॑नीम्। ह्वया॑मि। दे॒वम्। स॒वि॒तार॑म्। ऊ॒तये॑॥

सा० भा०—स्वस्तये अस्माकमविनाशाय। 'स्वस्तीत्यविनाशनाम' (निरु० ३.२१) इति यास्कः। प्रथमम् आदौ अग्निं ह्वयामि। इह अस्मिन् कर्मणि अवसे अस्मद्रक्षणाय मित्रावरुणौ ह्वयामि। जगतः जङ्गमस्य प्राणिजातस्य निवेशनीम् उपनिवेशनहेतुभूतां रात्रीं रात्रिदेवतां ह्वयामि। जङ्गमाः सर्वे प्राणिनो दिवसे स्वस्वव्यापारान् कृत्वा स्वस्वगृहे रात्रौ उपविशन्तीति प्रसिद्धम्। ऊतये अस्मद्रक्षणार्थं सवितारं देवं ह्वयामि॥ मित्रावरुणौ। 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः। 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम्। रात्रीम्। 'रात्रेश्चाजसौ' (पा० सू० ४.१.३१) इति ङीप्। निवेशनीम्। निविशन्त्यस्यामिति

निवेशनी । 'करणाधिकरणयोश्च' इति ल्युट् । 'टिड्ढाणञ्' ( पा० सू० ४.१.१५ ) इत्यादिना ङीप् । ऊतये । अवतेः क्तिनि 'ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ् । 'ऊतियूति' इत्यादिना क्तिन उदात्तत्वम् ॥

शब्दा०—ह्वयामि = बुलाता हूँ, अग्निम् = अग्नि को, प्रथमम् = प्रथम देव, स्वस्तये = कल्याण के लिये, ह्वयामि = बुलाता हूँ, मित्रावरुणौ = मित्र और वरुण को, इह = यहाँ, अवसे = रक्षा के लिए, ह्वयामि = बुलाता हूँ । रात्रीम् = रात्रि को, जगतः = सम्पूर्ण जंगम लोक को, निवेशनीम् = आराम देनेवाली, ह्वयामि = बुलाता हूँ, देवम् = देव को, सवितारम् = सवितृ को, ऊतये = रक्षा के लिये ।

अन्वयः—स्वस्तये प्रथमम् अग्निं ह्वयामि । इह अवसे मित्रावरुणौ ह्वयामि । जगतः निवेशनीं रात्रीं ह्वयामि । ऊतये देवं सवितारं ह्वयामि ।

हि० अ०—मैं प्रथम ( देव ) अग्नि को ( अपने ) कल्याण के लिये बुलाता हूँ ; मित्र तथा वरुण को यहाँ रक्षा के लिए बुलाता हूँ; सम्पूर्ण जंगम लोक को आराम देनेवाली रात्रि को बुलाता हूँ; सवितृ देव को सहायता के लिये बुलाता हूँ ।

*Trans.*—I invoke Agni, the first, for welfare ; I invoke Mitra and Varuṇa here for protection ; I invoke Night that gives rest to all moving ones ; I invoke god Savitar for help.

*Notes*—ह्वयामि–√*hvā* to call, pres. Ist. sing; not unaccented because it comes in the beginning of the pāda. मित्रावरुणौ—Dvandva compd. comprising both the members as names of the deities ; hence, both the members are accented ( देवताद्वन्द्वे च—Pāṇ. VI 2.141 ). Such compds. are not analysed in the pada-text. अवसे—Dative Infv. from √*av* 'to protect' + असे. निवेशनीम्—From नि + √*viś* 'to enter', by adding the suffixes ल्युट् and ङीप्. ऊतये—Dative Infv. from √*av* 'to protect' + क्तिन् ; व् with its penultimate vowel has become ऊ ( ज्वरत्वरस्रिव्यविमवामुपधायाश्च—Pāṇ. VI. 4.20 ); Udātta accent is on the suffix ( ऊतियूति०—Pāṇ. III, 3.97 )

आ कृष्णेन रजसा वर्तमानो
निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना
देवो याति भुवनानि पश्यन् ॥ २ ॥

आ । कृष्णेन । रजसा । वर्तमानः । निऽवेशयन् । अमृतम् । मर्त्यम् । च ॥ हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ॥

सा० भा०—सविता सूर्यः कृष्णेन रजसा कृष्णवर्णेन लोकेन । 'कृष्णं कृष्यतेर्निकृष्टो वर्णः' ( निरु० २. २० ) इति यास्कः । 'लोका रजांस्युच्यन्ते' ( निरु० ४. १९ ) इति च । अन्तरिक्षलोको हि सूर्यागमनात् पुरा कृष्णवर्णो भवति । तेनान्तरिक्षमार्गेण आ वर्तमानः पुनः पुनरागच्छन् अमृतं देवं मर्त्यं मनुष्यं च निवेशयन् स्वस्वस्थानेऽवस्थापयन् । यद्वा । अमृतं मरणरहितं प्राणं मर्त्यं मरणसहितं शरीरं च निवेशयन् । तथा चारण्यकाण्डे 'अमर्त्यो मर्त्येना सयोनिः' ( ऋ० सं० १. १६४. ३८ ) इत्येतस्य मन्त्रभागस्य व्याख्यानरूपे ब्राह्मणे यथोक्तोऽर्थोऽवगम्यते—'मर्त्यानि हीमानि शरीराणि अमृतैषा देवता' ( ऐ० ब्रा० २. १. ८ ) इति । यथोक्तगुणोपेतः सविता देवः भुवनानि सर्वान् लोकान् पश्यन् अवेक्षमाणः प्रकाशयन्नित्यर्थः । हिरण्ययेन सुवर्णनिर्मितेन रथेन आ याति अस्मत्समीपमागच्छति ॥ अमृतम् । मृतं मरणं नास्ति अस्येति बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । मर्त्यम् । मर्ते भवम् । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । हिरण्ययेन । 'ऋत्व्यवास्त्व्य' ( पा० सू० ६. ४. १७५ ) इत्यादिना मयटो मकारलोपो निपातितः । यस्येति लोपे प्रत्ययस्वरः । भुवनानि । 'भू सत्तायाम्' । 'भूसूधूभ्रस्जिभ्यश्छन्दसि' (उ० सू० २. २३८) इति क्युन्प्रत्ययः । योरनादेशे उवङादेशः । नित्त्वादाद्युदात्तत्वम् ॥

शब्दा०—कृष्णेन = अन्धकारमय, रजसा = अन्तरिक्ष से, आवर्तमानः = लौटते हुए, निवेशयन् = अपने-अपने कार्य में लगाते हुए, अमृतम् = देवताओं को, मर्त्यम् = मनुष्यों को, च = और, हिरण्ययेन =

स्वर्णमय; सविता = सवितृ देव, रथेन = रथ से, देवः = देव, आयाति = आ रहे हैं, भुवनानि = लोकों को, पश्यन् = देखते हुए।

अन्वय :—कृष्णेन रजसा आवर्तमानः, अमृतं मर्त्यं च निवेशयन्, हिरण्ययेन रथेन देवः सविता भुवनानि पश्यन् आ याति।

हि० अ०—अन्धकारमय अन्तरिक्ष से (होकर) लौटते हुए, देवताओं तथा मनुष्यों को (अपने-अपने कार्यों में) प्रवृत्त करते हुए स्वर्णमय रथ पर (चढ़कर) सवितृ देव सम्पूर्ण प्राणियों को देखते हुए आ रहे हैं।

*Trans.*—Returning through the darksome region, arousing the immortals and the mortals, God Savitar comes on the golden chariot beholding all the creatures.

*Notes*—आ वर्तमानः—Pres. part. + शानच् from √*vṛt* 'to turn'. Preposition may be separated from the participle as from a verb, and then it retains the accent as an independent word. निवेशयन्—नि + √*viś* 'to enter' + णिच् + शतृ; a preposition compounded with pres. part. is unaccented and separated by avagraha in the pada-text. अमृतम्—The first syllable of मृत is accented, when it comes after नञ् (अ) in a Bahuvrīhi compd. (नञो जरमरमित्रमृताः—Pāṇ. VI. 2.116). मर्त्यम्—Two-syllabled words ending in the suffix यत्, accent the first syllable (यतोऽनावः—Pāṇ. VI. 2.213) हिरण्ययेन—According to Sāyaṇa, the original word is हिरण्यमय (हिरण्य + मयट्), but म has been dropped (ऋत्व्यवास्त्व्यः—Pāṇ. VI. 4.175). Yāska has derived हिरण्य variously. (हिरण्यं कस्मात्। ह्रियते आयम्यमानमिति वा। ह्रियते जनाज्जनमिति वा। हितरमणं भवतीति वा। हृदयरमणं भवतीति वा। हर्यतेर्वा स्यात् प्रेप्साकर्मणः—Nir. II. 10). Sāyaṇa, however, derives हिरण्य from √*hary* 'to be gratified' (गतिकान्त्योः) with the suffix कन्यन् due to which, हर्य becomes हिर् (हर्यतेः कन्यन् हिर च—Uṇ. S. V. 722) आ याति—√*yā* with आ 'to come'. pres. 3rd sing. पश्यन्—Pres. part. from √*paś* 'to see' + शतृ.

यातिं देवः प्रवता यात्युद्वता
यातिं शुभ्राभ्यां यजतो हरिभ्याम् ।
आ देवो याति सविता परावतो-
ऽप विश्वा दुरिता बाधमानः ॥ ३ ॥

यातिं । देवः । प्रऽवता । यातिं । उत्ऽवता । यातिं । शुभ्राभ्याम् । यजतः । हरिंऽभ्याम् ॥ आ । देवः । याति । सविता । पराऽवतः । अप । विश्वा । दुःऽइता । बाधमानः ॥

सा० भा०—देवः दीप्यमानः सविता प्रवता प्रवणता मार्गेण याति गच्छति । तथा उद्वता उत्कृष्टेनोर्ध्वदेशयुक्तेन मार्गेण याति । उदयानन्तरं आमध्याह्नमूर्ध्वो मार्गः; तत उपरि आसायं प्रवणो मार्ग इति विवेकः । तथा यजतः यष्टव्यः स देवः शुभ्राभ्यां श्वेताभ्यां हरिभ्याम् अश्वाभ्यां याति देवयजनदेशे गच्छति । सविता देवः विश्वा दुरिता सर्वाणि पापानि अप बाधमानः विनाशयन् परावतः दूरदेशात् । 'परावतः' ( नि० ३. २६. ५) इति दूरनामसु पठितत्वात् । तादृशात् द्युलोकात् आ याति यागदेशे आगच्छति ॥ प्रवता । 'वन षण संभक्तौ' । अस्मात् प्रपूर्वात् क्विप् । 'गमादीनामिति वक्तव्यम्' ( पा० सू० ६. ४. ४०. १ ) इत्यनुनासिकलोपः । ततः तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । उद्वता । उत्पूर्वात् वनतेः पूर्ववत्प्रक्रिया । यजतः । 'भृमृदृशि' ( उ० सू० ३. ३९० ) इत्यादिना यजतेः कर्मणि अतच्प्रत्ययः । विश्वा दुरिता । उभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोपः ।

शब्दा०—याति = जाते हैं, देवः = देव, प्रवता = नीचे मार्ग से, याति = जाते हैं, उद्वता = ऊपर मार्ग से, याति = जाते हैं, शुभ्राभ्याम् = सफेद रंग के, यजतः = पूजनीय, हरिभ्याम् = दो अश्वों के साथ, देवः = देव, आ याति = आ रहे हैं, सविता = सवितृ, परावतः = बहुत दूर से, विश्वा = सम्पूर्ण, दुरिता = पापों को, अपबाधमानः = दूर करते हुए ।

अन्वय :—यजतः देवः शुभ्राभ्यां हरिभ्यां प्रवता याति, उद्वता याति । देवः सविता विश्वा दुरिता अप बाधमानः परावतः आ याति ।

हि० अ०—( सवितृ ) देव नीचे ( मार्ग ) से जाते हैं; ऊपर ( मार्ग ) से

Bahuvrīhi compd. having first member terminating in उ, accents the second member. इत्था—A particle of affirmation, expressing the sense of 'thus', 'truly', 'really'. उरुक्रमस्य स हि बन्धुरित्था—This stanza has variously been interpreted by the scholars. Sāyaṇa explains उरुक्रमस्य with विष्णोः and स हि बन्धुरित्था as a consequential sentence. Wilson following Sāyaṇa translates : 'for to such a degree is he the friend ( of the pious men )'; Griffith renders as, 'close akin to wide strider', Macdonell as 'for that truly akin the wide-strider.'

ता वां वास्तून्युश्मसि गमध्यै
यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः
परमं पदमव भाति भूरि ॥ ६ ॥

ता । वाम् । वास्तूनि । उश्मसि । गमध्यै । यत्र । गावः । भूरि-ऽशृङ्गाः । अयासः ॥ अत्र । अह । तत् । उरुऽगायस्य । वृष्णः । परमम् । पदम् । अव । भाति । भूरि ॥ ६ ॥

सा० भा०—हे पत्नीयजमानौ वां युष्मदर्थे ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोः गमनाय उश्मसि कामयामहे । तदर्थे विष्णुं प्रार्थयाम इत्यर्थः । तानीत्युक्तं कानीत्याह । यत्र येषु वास्तुषु गावः रश्मयः भूरिशृङ्गाः अत्यन्तोन्नत्युपेता बहुभिराश्रयणीया वा अयासः अयना गन्तारोऽतिविस्तृताः । यद्वा । यासो गन्तारः । अताहशाः । अत्यन्तप्रकाशयुक्ता इत्यर्थः । अत्राह अत्र खलु वास्त्वाधारभूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामानां वर्षितुर्विष्णोस्तत्ताहशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं पदं स्थानं भूरि अतिप्रभूतम् अव भाति स्वमहिम्ना स्फुरति । अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः—'तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वायासोऽयनाः.। तत्र

तद्रुरुगायस्य विष्णोर्महागतेः परमं पदं पराध्र्यस्थमवभाति भूरि। पादः पद्यते' ( निरु० २.७ ) इति ॥

शब्दा०—ता = उन, वाम् = तुम दोनों को, वास्तूनि = स्थानों पर, उश्मसि = हम इच्छा करते हैं, गमध्यै = जाने के लिये, यत्र = जहां, गावः = गायें, किरणें, भूरिशृङ्गाः = बहुत सींगवाली, अत्यधिक-प्रकाशवाली, अयासः = हमेशा गतिशील रहनेवाली, अत्र = यहां, अह = निश्चित अर्थ का वाचक एक निपात, तत् = उस प्रकार का, उरुगायस्य = विशाल गतिवाले का, वृष्णः = कामनाओं की पूर्ति करनेवाले का, परमम् = श्रेष्ठ, पदम् = स्थान, अव = नीचे, भाति = प्रकाशित हो रहा है, भूरि = अत्यधिक रूप से।

हि० अ०—तुम दोनों को उन स्थानों पर जाने के लिये मैं इच्छा करता हूँ, जहां पर बहुत सींगवाली ( अत्यधिक प्रकाशवाली ), हमेशा गतिशील रहनेवाली गायें ( किरणें ) हैं। यहीं पर विशाल गतिवाले, इच्छाओं की पूर्ति करने वाले ( विष्णु ) का उस प्रकार का परम धाम नीचे ( हमारी तरफ ) अत्यधिक रूप से प्रकाशित हो रहा है।

***Trans.***—I desire those abodes for you two to go there where are the many-horned and active kine. Here indeed, the highest station of wide strider, the fulfiller of desire, shines downwards ( on us ) abundantly.

***Notes***—वाम्—Sāyaṇa understands वाम् for the sacrificer and his wife and construes it with गमध्यै; Griffith and Macdonell think it for Indra and Viṣṇu and construe it with वास्तूनि. उश्मसि—√*vas* 'to desire,' pres. Ist. plu; उ is the Samprasāraṇa of व्. In the Vedic language the verb in pres. Ist. plu, has मसि ending very frequently ( इदन्तो मसि—pān. ) गमध्यै—Dative infinitive in ध्यै from √*gam* 'to go.' भूरिशृङ्गाः—Bahuvrihi compd. accented on the first member. गावः—Nom. plu. of गो; Yāska followed by Sāyaṇa explains it as 'rays'; Roth understends it as 'stars'. Griffith and Macdonell prefer Yāska's interpretation.

अयासः—Nom. plu. of अय from √i 'to go'; In the Vedic language words ending in अ very frequently has आसस् ending in nom. plu. in place of आस् ( आज्जसेरसुक्—pān. ) Sāyaṇa explains it as 'अयना गन्तारोऽतिविस्तृताः । यद्वा । यासो गन्तारः । अतादृशाः अत्यन्तप्रकाशयुक्ता इत्यर्थः;' Wilson takes it to mean 'wide-spreading', Griffith and Macdonell as 'nimble.'

भाति—√*bhā* 'to shine. pres. 3rd. sing.

# INDRA

द्वितीयेऽनुवाके एकादश सूक्तानि। तत्र 'यो जातः' इति पञ्चदशर्चं प्रथमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम्। संसवे निष्केवल्ये निविद्धानीयस्य पुरस्तात् 'यो जात एव' इति सूक्तं शंसेत्। 'यदि पर्यायान्' इति खण्डे सूत्रितं—'यो जात एवेति निष्केवल्ये' (आश्व० श्रौ० ६-६) इति। आभिप्लविके तृतीयेऽहनि निष्केवल्ये 'यो जात एव' इति निविद्धानीयम्। सूत्रितं च—'तृतीयस्य अर्यमा यो जात एवेति मध्यंदिनः' (आश्व० श्रौ० ७.७) इति। विश्वजिति माध्यंदिनसवने मैत्रावरुणः स्वशस्त्रे प्राकृतात् सूक्तात्पूर्वं 'यो जातः' इति सामसूक्तं शंसेत्। 'विश्वजितोऽग्निं नरः' इति खण्डे सूत्रितं—'सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानि' (आश्व० श्रौ० ८.७) इति अग्निष्टुन्निष्केवल्ये निविद्धानमिदम्। 'श्येनाजिराभ्याम्' इति खण्डे सूत्रितं—'तिष्ठा हरी इति यो जात एवेति मध्यंदिनः' (आश्व० श्रौ० ९.७) इति। महाव्रते निष्केवल्ये 'यो जात एव' इति सूक्तम्। 'ऊरु' इति खण्डे सूत्रितं—'वने न वा यो न्यधायि चाकन् यो जात एव प्रथमो मनस्वान्' (ऐ० आ० ५.३.१) इति। अत्रेतिहासो बृहद्देवतायामुक्तः—'संयुज्य तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः। अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च॥ तमिन्द्र इति मत्वा तु दैत्यौ भीमपराक्रमौ। धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः॥ विदित्वा स तयोर्भावमृषिः पापं चिकीर्षतोः। यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत्' (बृहद्दे० ४. ६६-६८)॥ अन्ये तु अन्यथा वर्णयन्ति। पुरा किल इन्द्रादयो वैन्ययज्ञं समाजग्मुः गृत्समदोऽपि तत्रागत्य सदस्यासीत्। दैत्याश्चेन्द्रजिघांसया तत्र समागमन्। तान् दृष्ट्वा निर्जगामेन्द्रो यज्ञाद्गृत्समदाकृतिः। स च गृत्समदो वैन्येन पूजितो यज्ञवाटान्निरगच्छत्। निर्गच्छन्तं तमृषिं दृष्ट्वा अयमेवेन्द्र इति मन्यमानास्तमसुराः परिवव्रुः। नाहमिन्द्रस्तुच्छः किंत्वेवंगुणोपेतः स इत्यनेन सूक्तेन तान् प्रत्युवाच। अपरे त्वेवं कथयन्ति। गृत्समदस्य यज्ञे प्रविष्टमेकाकिनमिन्द्रं ज्ञात्वासुराः परिवव्रुः। स इंद्रो गृत्समदरूपेण यज्ञवाटान्निर्गत्य स्वर्गं जगाम। ततोऽसुरा इन्द्रो विलम्बित इत्यन्तः प्रविश्य गृत्समदं दृष्ट्वा पूर्वमेव गृत्समदो गतः अयं त्विन्द्रोऽस्मद्भयाद् गृत्समदरूपेणास्ते तं जगृहुः। इति स तान् नाहमिन्द्रोऽयमित्यनेन सूक्तेन प्रत्युवाच। अयमेवार्थो महाभारते प्रपञ्चितः॥

यो जात एव प्रथमो मनस्वा-
न्देवो देवान्क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां
नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना । परिऽअभूषत् ॥ यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् । नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ॥ १ ॥

सा० भा०—गृत्समदो ब्रूते । जनासः जना हे असुराः यो जात एव जायमान एव सन् प्रथमः देवानां प्रधानभूतः मनस्वान् मनस्विनामग्रगण्यः देवः द्योतमानः सन् क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् सर्वान् यागदेवान् पर्यभूषत् रक्षकत्वेन पर्यग्रहीत् । 'भूष अलंकारे' । भ्वादिः लङि रूपम् । यद्वा । सर्वानन्यान्देवान्पर्यभूषत् पर्यभवत् अत्यक्रामत् । अस्मिन् पक्षे भवतेर्व्यत्ययेन क्सः । 'श्युकः किति' इति इट्प्रतिषेधः । यस्य इन्द्रस्य शुष्मात् शरीरात् बलात् रोदसी द्यावापृथिव्यौ अभ्यसेताम् अबिभीताम् । 'भ्यस भये' अनुदात्तेत् । 'भ्यस भयवेपनयोः' (निरु० ३.२१) इति नैरुक्ताः । अभ्यसेतामवेपेतां वा । तथा च मन्त्रान्तरम् 'इमे चित्तव मन्यवे वेपेते भियसामही' (ऋ० सं० १.८०.११) इति । नृम्णस्य सेनालक्षणस्य बलस्य मह्ना महत्त्वेन युक्तः सः इन्द्रः नाहमिति । अत्र निरुक्तं—'यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा यस्य बलात् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता' (निरु० १०.१०) इति ॥

शब्दा०—यः = जो, जातः = उत्पन्न होकर, एव = ही, प्रथम = सर्वप्रथम, मनस्वान् = बुद्धिमान्, मनस्वी, देवः = देव ने, देवान् = देवताओं के ऊपर, क्रतुना = पराक्रम से, पर्यभूषत् = आधिपत्य स्थापित किया, यस्य = जिसके, शुष्मात् = शक्ति के सामने, रोदसी = आकाश तथा पृथिवी, अभ्यसेताम् = कांपते हैं, नृम्णस्य = महान् बल की, मह्ना = महिमा से, सः = वह, जनासः = हे मनुष्यों, इन्द्रः = इन्द्र ।

अन्वय—यः प्रथमः मनस्वान् देवः जातः एव क्रतुना देवान् पर्यभूषत्; यस्य शुष्माद् रोदसी अभ्यसेताम्; (हे) जनाः, नृम्णस्य मह्ना सः इन्द्रः (अस्ति)।

हि० अ०—जिस प्रधान बुद्धिमान देव ने उत्पन्न होते ही अपने पराक्रम से सर्वप्रथम देवताओं के ऊपर आधिपत्य पाया; महान् बल के कारण जिसकी शक्ति के सामने आकाश तथा पृथिवी कांपते हैं, हे मनुष्यों, वह इन्द्र है।

*Trans.*—Who, the chief wise god, as soon as born, surpassed the gods through his power, Before whose power by greatness of his valour, heaven and earth feared, O men, he is Indra.

*Notes.*—मनंस्वान्—The stem ending in consonant is not separated from the suffix वतुप् in the Pada-text, the latter being separated only after vowels. क्रतुंना—Instr. sing of क्रतु (cf. क्रत्वा). पर्यभूंषत्—√*bhuṣ* to adorn. impf. 3rd sing.; not unaccented because preceded by यः; prefix परि is unaccented; the upasargas, compounded with such verbs, one unaccented (गतिर्गतौ। तिङि चोदात्तवति—pāṇ VIII. 1–70–71). Wilson takes it to mean 'has done honour', Griffith as 'became protector' and Macdonell as 'surpassed'. अभ्यसेताम्—√*bhyas* to fear or tremble (Nir. III. 21), impf. 3rd. dual; not unaccented because preceded by यस्य. मह्ना—Instr. sing of महत् (cf. महिना, महिम्ना, महता), जनासः—Voc. plu. in आसस्; not unaccented because not coming in the beginning of the pāda.

यः पृथिवीं व्यथमानामदृंह-
यः पर्वतान्प्रकुंपिताँ अरंम्णात्।
यो अन्तरिक्षं विममे वरीयो
यो द्यामस्तंभ्नात्स जंनास इन्द्रः॥ २॥

यः । पृथिवीम् । व्यथमानाम् । अदृंहत् । यः । पर्वतान् । प्रऽकुपितान् । अरम्णात् ॥ यः । अन्तरिक्षम् । विऽममे । वरीयः । यः । द्याम् । अस्तभ्नात् । सः । जनासः । इन्द्रः ॥ २ ॥

सा० भा०—हे जनाः यः इन्द्रः व्यथमानां चलन्तीं पृथिवीम् अदृंहत् शर्करादिभिर्दृढामकरोत् । 'दृह दृहि वृद्धौ' । यः च प्रकुपितान् इतस्ततश्चलितान् पक्षयुक्तान् पर्वतान् अरम्णात् नियमितवान् स्वे स्वे स्थाने स्थापितवान् । अरम्णात् । 'रमु क्रीडायाम्' अन्तर्भावितण्यर्थस्य व्यत्ययेन श्नाप्रत्ययः । यः च वरीयः उरुतमम् अन्तरिक्षं विममे निर्ममे विस्तीर्णं चकारेत्यर्थः । यः च द्यां दिवम् अस्तभ्नात् तस्तम्भ निरुद्धामकरोत् । 'स्तम्भु रोधने' इति सौत्रो धातुः । सः एव इन्द्रः नाहमिति ॥

शब्दा०—यः = जिसने, पृथिवीम् = पृथिवी को, व्यथमानाम् = कांपती हुई, अदृंहत् = स्थिर किया, यः = जिसने, पर्वतान् = पर्वतों को, प्रकुपितान् = इधर उधर उड़नेवाले, अरम्णात् = स्थापित किया, यः = जिसने, अन्तरिक्षम् = अन्तरिक्ष को, विममे = विस्तृत किया, वरीयः = अधिक चौड़ा, यः = जिसने, द्याम् = आकाश को, अस्तभ्नात् = रोका, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वय—यः व्यथमानाम् पृथिवीम् अदृंहत्, यः प्रकुपितान् पर्वतान् अरम्णात्, यः अन्तरिक्षम् वरीयः विममे, यः द्याम् अस्तभ्नात् ( हे ) जनासः, सः इन्द्रः ( अस्ति ) ।

हि० अ०—जिसने कांपती हुई पृथिवी को स्थिर किया; जिसने ( इधर-उधर ) उड़ने वाले पर्वतों को ( अपने-अपने स्थान पर ) स्थापित किया; जिसने अन्तरिक्ष को चौड़ाई में विस्तृत किया; जिसने आकाश को ( गिरने से ) रोका; हे मनुष्यों, वह इन्द्र है ।

*Trans.*—Who made firm the quivering earth; who set at rest the agitated mountains; who spread the aerial region wider; who propped the heaven, O men, he is Indra.

*Notes.*—व्यथमानाम् √ *vyath* to puiver, pres. part. fem. acc. sing. अदृंहत् √ *dṛmh* to make firm, impf. 3rd. sing.; not unaccented because preceded by यः प्रकुपितान्—√ *kup* to be

angry, past part. acc. plu. अरम्णात्—√ram to set at rest, impf. 3rd. sing; not unaccented because preceded by यः, विमुमे—See I. 154.1. वरीयः—Comparative degree of उरु from *ur* by Samprasāraṇa with the suffix ईयसुन् अस्तभ्नात्√stabh to prop, impf. 3rd. sing.; not unaccented because preceded by यः.

यो हुत्वाहिमरिणात्सुप्त सिन्धू-
न्यो गा उदाजदपधा वुलस्य ।
यो अश्मनोरुन्तरुग्निं जुजान
संवृक्समत्सु स जनास इन्द्रः ॥ ३ ॥

यः । हुत्वा । अहिम् । अरिणात् । सुप्त । सिन्धून् । यः । गाः । उत्ऽआजत् । अपऽधा । वुलस्य ॥ यः । अश्मनोः । अन्तः । अग्निम् । जुजान । सम्ऽवृक् । समत्ऽसु । सः । जनासः । इन्द्रः ॥ ३ ॥

सा० भा०—यः अहिं मेघं हत्वा मेघहननं कृत्वा सप्त सर्पणशीलाः सिन्धून् स्यन्दनशीला अपः अरिणात् प्रैरयत् । यद्वा सप्त गङ्गायमुनाद्या मुख्या नदीररिणात् । 'रीङ् स्रवणे' क्र्यादिः । यः च वलस्य वलनामकस्यासुरस्य अपधा तत्कर्तृकान्निरोधान्निरुद्धाः गाः उदाजत् निरगमयत् । अपधा अपपूर्वाद्दधातेः 'आतश्चोपसर्गे' (पा० सू० ३. ३. १०६) इति भावे अङ् प्रत्ययः । 'सुपां सुलुक्' इति पञ्चम्या आकारः । यः च अश्मनोः । अश्नुते व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः । अत्यन्तमृदुरूपयोर्मेघयोः अन्तः मध्ये वैद्युतम् अग्निं जजान उत्पादयामास । यश्च समत्सु संभक्षयन्ति योद्धृणामायूंषीति समदः संग्रामाः । तेषु संवृक् भवति । वृणक्तेर्हिंसार्थस्य क्विपि रूपम् । सः इन्द्रः नाहमिति ॥

शब्दा०—यः = जिसने, हत्वा = मारकर, अहिम् = राक्षस (बादल) को, अरिणात् = प्रवाहित किया, सप्त = सात, सिन्धून् = नदियों को, यः = जिसने, गाः = गायों को, उदाजत् = निकाला, अपधा = गुफा से, वलस्य = वल की, यः = जिसने, अश्मनोः = बादलों के या पत्थरों के, अन्तः = बीच, अग्निम्

=अग्नि को, जजान=उत्पन्न किया, संवृक्=शत्रु का संहार करनेवाला, समत्सु=युद्धों में, सः=वह, जनासः=हे मनुष्यों, इन्द्रः=इन्द्र।

अन्वय—यः अहिम् हत्वा सप्त सिन्धून् अरिणात्, यः वलस्य अपधा गाः उदाआजत्, यः अश्मनोः अन्तः अग्निम् जजान, (यः) समत्सु संवृक्, (हे) जनासः, सः इन्द्रः (अस्ति)।

हि० अ०—जिसने अहि नामक राक्षस (बादल) को मारकर सात नदियों को प्रवाहित किया, जिसने वल की गुफा से गायों को निकाला; जिसने मेघों के बीच (विद्युत्) अग्नि को उत्पन्न किया, (जो) युद्धों में (शत्रु का) संहार करनेवाला है, हे मनुष्यो, वह इन्द्र है।

*Trans.*—Who having slain a serpent dragon made the seven rivers flow; who released the cows from the hiding of Vala; who generated fire between two clouds, a spoiler in the battle, O men, he is Indra.

*Notes.*—हत्वा—Gerund in त्वा with the root √*han* to kill. अरिणात्—√*ri* to flow, impf, 3rd. sing.; not unaccented because preceded by यः. उदाजत्—*aj* √to drive, impf. 3rd. sing.; not unaccented because preceded by यः. अपधा—From अप + √*dha* + अङ्; final आ is Abl. termination (सुपां सुलुक्— Pāṇ VII. 1.39). Macdonell takes it as instr. sing. and translates 'by unclosing'. जजान—√*jan* to generate, perf. 3rd. sing.; not unaccented because preceded by यः संवृक्— 'Invincible' (Wlison), 'spoiler' (Griffith.), 'victor' (Macdonell.). समत्सु—The termination सु preceded by uncerebralizing vowels or any of the consonants is separated by avagraha in the Pada-text.

येनेमा विश्वा च्यवना कृतानि
यो दासं वर्णमधरं गुहाकः।
श्वघ्नीव यो जिगीवां लक्षमाद-
दर्यः पुष्टानि स जनास इन्द्रः॥ ४॥

येन । इमा । विश्वा । च्यवना । कृतानि । यः । दासम् । वर्णम् । अधरम् । गुहा । अकरित्यकः ॥ श्वघ्नीऽइव । यः । जिगीवान् । लक्षम् । आदत् । अर्यः । पुष्टानि । सः । जनासः । इन्द्रः ॥ ४ ॥

सा० भा०—येन इन्द्रेण इमा इमानि विश्वा च्यवना नश्वराणि भुवनानि कृतानि स्थिरीकृतानि । यः च दासं वर्णं शूद्रादिकम् । यद्वा दासमुपक्षपयितारम् । अधरं निकृष्टमसुरं गुहा गुहायां गूढस्थाने नरके वा अकः अकार्षीत् । करोतेर्लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुकि रूपम् । लक्षं लक्ष्यं जिगीवान् । 'जि जये' क्वसौ 'सन्लिटोर्जेः' इति अभ्यासादुत्तरस्य कुत्वम् । दीर्घश्छान्दसः । जितवान् । यः अर्यः अरेः । षष्ठ्येकवचने छान्दसो यणादेशः । शत्रोः संबन्धीनि पुष्टानि समृद्धानि आदत् आदत्ते । तत्र दृष्टान्तः । श्वघ्नीव । श्वभिर्मृगान् हन्तीति श्वघ्नी व्याधः । यथा व्याधो जिघृक्षितं मृगं परिगृह्णाति तद्वत् ॥

शब्दा०—येन = जिसके द्वारा, इमा = ये, विश्वा = सम्पूर्ण, च्यवना = गतिमान्, कृतानि = की गई हैं, यः = जिसने, दासम् = दास, वर्णम् = जाति को, अधरम् = नीच, गुहा = गुफाओं में, अकः = किया, श्वघ्नीव = शिकारी की तरह, जिगीवान् = जीतकर, लक्षम = शिकार को, आदत् = ग्रहण किया, अर्यः = शत्रु के, पुष्टानि = रक्षित धन को, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वय—येन इमा विश्वा च्यवना कृतानि, यः दासं वर्णम् गुहा अधरं अकः, यः श्वघ्नीव लक्षम् जिगीवान् अर्यः पुष्टानि आदत् ( हे ) जनासः सः इन्द्रः ( अस्ति ) ।

हि० अ०—जिसके द्वारा ये सम्पूर्ण ( चीजें ) गतिमान् की गईं; जिसने नीच दास जाति को गुफाओं में किया; जिसने जीतकर शत्रु के रक्षित धन को ग्रहण किया जैसे शिकार अपने शिकार को, हे मनुष्यों, वह इन्द्र है ।

*Trans.*—By whom all these are made unstable, who made the low slave colour ( hide ) in the cavern, who having conquered, took the cherished treasures of enemy as a hunter a prey.

*Notes*—च्यवना—From √*cyu* to move. perishable' (wilson) tremble' ( Griffith ), unstable' ( Macdonell ) In the vedic

language the nom. and acc. plu. case-ending नि is sometimes dropped. In the classical sanskrit the form would be च्यवनानि and not च्यवना. same is the case with इमा (sk. इमानि) and विश्वा (sk विश्वानि). दासं वर्णम्—Sāyaṇa renders 'शूद्रादिकम्' for दासं वर्णम् Wilson as 'servile tribe', Griffith as 'brood of demons' and Macdonell as 'Dāsa colour'; the word दास as a substantive accents the second syllable but as an adj. it accents the first syllable. अधरम्—'Base' (Wilson), 'humbled' (Griffith); Macdonell takes it as a predicative use meaning. 'subject'. गुहा—Here it is used in the sense of locative sing, the declensional suffix being dropped (सुपां सुलुक्—pāṇ. VII. 1.39) अकः—√kṛ to do root-aorist, 3rd sing.; not unaccented because preceded by यः; final visarjanīya is rhotasized; hence इति is added to it in the Pada-text. For the repetition of the word after इति see 'Vaidika-Svara-Bodha', p. 110. श्वघ्नीव—'Like a hunter' (Sāyaṇa), 'like a gambler' (Griffith and Macdonell). जिगीवान्—From √ji to win, with the suffix क्वसु; part लक्षम्—'Prey' (Wilson) 'winning' (Griffith), 'stake' (Macdonell). आदत्—√dā to give, irr. 'a'-aorist, 3rd. sing.; not unaccented because praceded by यः Prefix आ is not separated from the verb in the Pada-text. पुष्टानि—past part. acc. plu. of पुष्ट from √puṣ to floutish, with the suffix क्त.

यं स्मा पृच्छन्ति कुह सेति घोर-
मुतेमाहुर्नैषो अस्तीत्येनम् ।
सो अर्यः पुष्टीर्विज इवा मिनाति
श्रदस्मै धत्त स जनास इन्द्रः ॥ ५ ॥

यम् । स्म । पृच्छन्ति । कुह । सः । इति । घोरम् । उत । ईम् ।
आहुः । न । एषः । अस्ति । इति । एनम् ॥ सः । अर्यः । पुष्टीः ।

विजःऽइव । आ । मिनाति । श्रत् । अस्मै । धत्त । सः । जनासः । इन्द्रः ॥ ५ ॥

सा० भा०—अपश्यन्तो जनाः घोरं शत्रूणां घातकं यं पृच्छन्ति स्म कुह सेति । स इन्द्रः कुत्र वर्तते इति । सेति । 'सोऽचि लोपे चेत्पादपूरणम्' इति सोर्लोपे गुणः । न क्वचिदसौ तिष्ठतीति मन्यमानाः एनम् इन्द्रम् आहुः एषः इन्द्रः न अस्तीति । तथा च मन्त्रः—'नेन्द्रो अस्तीति नेम उ त्व आह' ( ऋ०-सं० ८.१००.३ ) इति । ईम् इति पूरणः । सः इन्द्रः विजइव । इवशब्द एवार्थे । उद्वेजक एव सन् अर्यः अरेः संबन्धीनि पुष्टीः पोषकाणि गवाश्वादीनि धनानि आ मिनाति सर्वतो हिनस्ति । 'मीङ् हिंसायाम्' । 'मीनातेर्निगमे' इति ह्रस्वः । तस्मात् श्रदस्मै इन्द्राय धत्त । स इन्द्रोऽस्तीति विश्वासमत्र कुरुत । यद्यप्यसौ विशेषतोऽस्माभिर्न दृश्यते तथापि अस्तीति विश्वासं कुरुत । एवं निर्धारणीयमहिमोपेतः सः इन्द्रः नाहमिति ॥

शब्दा०—यम् = जिसके, स्म = प्रश्न पूछने का वाचक एक निपात, पृच्छन्ति = पूछते हैं, कुह = कहाँ, सः = वह, इति = ऐसा, घोरम् = भयानक उत = और, ईम् = उसके विषय में, आहुः = कहते हैं, न = नहीं, एषः = यह, अस्ति = है, इति = ऐसा, एनम् = इसको, सः = वह, अर्यः = शत्रु-संबन्धी, पुष्टीः = रक्षित धन, विजइव = उत्तेजित होते हुये की तरह, आ = चारों तरफ से, मिनाति = नष्ट करता है, श्रत् = श्रद्धा, अस्मै = उसके लिये, धत्त = रखो, धारण करो, सः = वह, जनासः = हे मनुष्य, इन्द्रः = इन्द्र ।

अन्वय—यम् ( जनाः ) पृच्छन्ति स्म 'कुह सः' इति; उत एनम् ईम् 'एषः न अस्ति' इति आहुः । सः विजः इव अर्यः पुष्टीः आ मिनाति । ( हे ) जनासः सः इन्द्रः अस्ति । अस्मै श्रद् धत्त ।

हि० अ०—जिस भयानक के विषय में 'वह कहाँ है' ऐसा ( वे ) पूछते हैं; तथा 'वह नहीं है' ऐसा भी वे उसी के ही विषय में कहते हैं, वह उत्तेजित होते हुये की तरह शत्रु के रक्षित धन को चारों तरफ से विनष्ट करता है; उसमें विश्वास रखो; हे मनुष्य, वह इन्द्र है ।

*Trans.*—Whom, the terrible one, ( they ) ask 'where is he' and verily of him ( they ) say 'he is not'. He destroys the cherished wealth of enemies as being agitated; put faith in him ; O men, he is Indra.

*Notes*—पृच्छन्ति—√*prach* 'to ask' pres. 3rd. plu.; not unaccented because preceded by यम्. आहुः—√*ah* to to say, perf. 3rd, plu. विजइव—Sāyaṇa takes इव in the sense of एव (इव शब्द एवार्थः) and he renders विजइव by 'उद्वेजक एव सन्'; Wilson translates as 'inflicting (chastisement). Griffith as 'like birds' and Macdonell as 'like the player's stake' मिनाति—√*mī* to damage, pres. 3rd. sing. धत्त—√*dhâ* to put, impv. 2nd. plu.

यो रध्रस्य चोदिता यः कृशस्य
यो ब्रह्मणो नाधमानस्य कीरेः ।
युक्तग्राव्णो योऽविता सुशिप्रः
सुतसोमस्य स जनास इन्द्रः ॥ ६ ॥

यः । रध्रस्य । चोदिता । यः कृशस्य । ब्रह्मणः । नाधमानस्य । कीरेः ॥ युक्तऽग्राव्णः । यः । अविता । सुऽशिप्रः । सुतऽसोमस्य । सः । जनासः । इन्द्रः ॥६॥

सा० भा०—यो रध्रस्य । 'रध् हिंसासंराद्ध्योः' । समृद्धस्य चोदिता धनानां प्रेरयिता भवति । यः च कृशस्य च दरिद्रस्य च यः च नाधमानस्य । 'नाधृणाधृयाच्ञोपतापैश्वर्याशीःषु' । याचमानस्य कीरेः । करोतेः कीर्तयतेर्वा । स्तोतुः ब्रह्मणः ब्राह्मणस्य च धनानां प्रेरयिता । यः च सुशिप्रः शोभनहनुः सुशीर्षको वा सन् युक्तग्राव्णः अभिषवार्थमुद्यतग्राव्णः सुतसोमस्य अभिषुतसोमस्य यजमानस्य अविता रक्षिता भवति सः एव इन्द्रः नाहमिति । ब्रह्मशब्दस्य त्वन्नपरत्वे ह्याद्युदात्तता स्यात् यथा 'ब्रह्म वन्वानो अजरं सुवीरम्' (ऋ० स० ३. ८. २) इति । अयं त्वन्तोदात्तः पठ्यत इति नान्नपरः ॥

शब्दाः—यः = जो, रध्रस्य = धनवान का, चोदिता = प्रेरक, यः = जो, कृशस्य = निर्धन का, यः = जो, ब्रह्मणः = पुरोहित का, नाधमानस्य = सहायता चाहने वाले का, कीरेः = स्तुति गायक का, युक्तग्राव्णः = सोम पीसने के लिये पत्थरों को तैयार करनेवाले का, यः = जो, अविता = रक्षक,

सुशिप्रः = सुन्दर ओष्ठवाला, सुतसोमस्य = सोम पीसनेवाले का, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वय—यः रध्रस्य चोदिता ( अस्ति ), यः कृशस्य, यः ब्रह्मणः, ( यः ) नाधमानस्य कीरेः ( चोदिता अस्ति ); यः सुशिप्रः युक्तग्राव्णः सुतसोमस्य ( च ) अविता ( अस्ति ) ( हे ) जनासः सः इन्द्रः अस्ति ।

हि० अ०—जो धनवान का प्रेरक है; जो निर्धन का ( प्रेरक है ); जो सहायता चाहनेवाले स्तुति-गायक पुरोहित का ( प्रेरक है ); सोम पीसने के लिये पत्थरों को तैयार किया है तथा सोम पीस लिया है जिसने ऐसे यजमान ) का जो सुन्दर ओष्ठ वाला सहायक है, हे मनुष्यो, वह इन्द्र है ।

*Trans.*—Who is the impeller of rich; who of the poor; who of the Brahmin singer, seeking help; who, the beautiful-lipped, is the protector of him who has set stones to work and he who has pressed Soma; O men, he is Indra.

*Notes*—चोदिता—From √*cud* 'to impel' by adding the suffix तृच्; agent noun ( masc. ) accented on the suffix. ब्रह्मणः—Gen. sing of ब्रह्मन्; the word ब्रह्मन् when accents the root, it becomes action noun ( neut. ) meaning 'prayer', but when it accents the suffix, it becomes agent noun ( mascu. ) meaning 'priest.' नाधमानस्य—√*nādh* to seek aid.' with the suffix शानच्, gen sing. कीरेः—Gen. sing. of कीरि which is derived from √*kṛ* 'to make' with the suffix इ, the root *kṛ* being pronounced as *kir*. युक्तग्राव्णः—युक्त is past part. from √*yuj* 'to join' + क्त; Bahuvrīhi compd. accented on the first member. अविता—Agent noun from √*av* 'to protect' with the suffix तृच्. सुशिप्रः—Bahuvrīhi compd. accented on the second member ( नञ्सुभ्याम्—Pāṇ. VI.2.172 ); Sāyaṇa explains it as 'शोभनहनुः सुशीर्षको वा'; Wilson as 'of goodly features', Griffith as 'fair-faced' and Macdonell as 'fair-lipped'. सुतसोमस्य—सुत is the past part from √*su* 'to press' + क्त; Bahuvrīhi compd. accented on the first member.

यस्याश्वासः प्रदिशि यस्य गावो
यस्य ग्रामा यस्य विश्वे रथासः।
यः सूर्यं य उषसं जजान
यो अपां नेता स जनास इन्द्रः ॥ ७ ॥

यस्य । अश्वासः । प्रऽदिशि । यस्य । गावः । यस्य । ग्रामाः । यस्य । विश्वे । रथासः ॥ यः । सूर्यम् । यः । उषसम् । जजान । यः । अपाम् । नेता । सः । जनासः । इन्द्रः ॥ ७ ॥

सा॰ भा॰—यस्य सर्वान्तर्यामितया वर्तमानस्य प्रदिशिं प्रदेशनेऽनुशासने अश्वासः अश्वा वर्तन्ते । यस्य अनुशासने गावः ; यस्य अनुशासने ग्रामाः । ग्रसन्तेऽत्रेति ग्रामा जनपदाः । यस्य आज्ञायां विश्वे सर्वे रथासः रथा वर्तन्ते । यः च वृत्रं हत्वा सूर्यं जजान जनयामास । यः च उषसम् । तथा मन्त्रः—'जजान सूर्यमुषसं सुदंसाः' ( ऋ॰ सं॰ ३. ३२. ८ ) इति । यः च मेघभेदनद्वारा अपां नेता प्रेरकः सः इन्द्रः इत्यादि प्रसिद्धम् ।

शब्दा॰—यस्य = जिसकी, अश्वासः = घोड़े, प्रदिशि = आज्ञा में, यस्य = जिसकी, गावः = गायें, यस्य = जिसकी, ग्रामाः = गाँव, यस्य = जिसकी, विश्वे = सम्पूर्ण, रथासः = रथ, यः = जो, सूर्यम् = सूर्य को, यः = जो, उषसम् = उषा को, जजान = उत्पन्न किया, यः = जो, अपाम् = जल का, नेता = ले जानेवाला, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वय—यस्य प्रदिशि अश्वासः, यस्य ( प्रदिशि ) गावः, यस्य ( प्रदिशिं ) ग्रामाः, यस्य ( प्रदिशि ) विश्वे रथासः ( वर्तन्ते ), यः सूर्यं यः उषसं जजान, यः अपां नेता, ( हे ) जनासः सः इन्द्रः ( अस्ति ) ।

हि॰ अ॰—जिसकी विशिष्ट आज्ञा में अश्व हैं; जिसकी ( आज्ञा में ) गायें हैं; जिसकी ( आज्ञा में ) गाँव हैं; जिसकी ( आज्ञा में ) सम्पूर्ण रथ हैं; जिसने सूर्य को, जिसने उषा को जन्म दिया; जो जल का नेता है, हे मनुष्यो, वह इन्द्र है ।

*Trans.*—In whose distinguished command are the horses ; ( in ) whose cows ; ( in ) whose villages ; ( in )

whose all chariots. Who generated the sun; who the dawn; who is the leader of the waters; O men, he is Indra.

*Notes*—जुजानं—√ *jan* 'to generate', perf 3rd. sing.; not unaccented because preceded by यः.

यं क्रन्दसी संयती विह्वयेते
परेऽवर उभया अमित्राः ।
समानं चिद्रथमातस्थिवांसा
नाना हवेते स जनास इन्द्रः ॥ ८ ॥

यम् । क्रन्दसी इति । संयती इति सम्ऽयती । विह्वयेते इति विऽह्वयेते । परे । अवरे । उभयाः । अमित्राः ॥ समानम् । चित् । रथम् । आतस्थिऽवांसा । नाना । हवेते इति । सः । जनासः । इन्द्रः ॥ ८ ॥

सा० भा०—यं क्रन्दसी रोदसी शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने वा संयती परस्परं संगच्छन्त्यौ यमिन्द्रं विह्वयेते स्वरक्षार्थं विविधमाह्वयतः । परे उत्कृष्टाः अवरे अधमाश्च उभयाः उभयविधाः अमित्राः शत्रवः यमाह्वयन्ति । समानम् इन्द्ररथसदृशं रथम् आतस्थिवांसा आस्थितौ द्वौ रथिनौ तमेवेन्द्रं नाना पृथक् पृथक् हवेते आह्वयेते । यद्वा समानमेकरथमारूढाविन्द्राग्नी हवेते यज्ञार्थं यजमानैः पृथगाहूयेते तयोरन्यतरः सः इन्द्रः नाहमिति ॥

शब्दा०—यम् = जिसको, क्रन्दसी = जोर से चिल्लाती हुई, संयती = एक साथ (युद्ध में) जाती हुई, विह्वयेते = विभिन्न प्रकार से बुलाती हैं, परे = शक्तिशाली, अवरे = कमजोर, उभयाः = दोनों, अमित्राः = शत्रु, समानम् = एक ही, चित् = निश्चित अर्थ का वाचक एक निपात, रथम् = रथ पर, आतस्थिवांसा = बैठे हुये, नाना = अलग-अलग, हवेते = बुलाते हैं, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वय—यं क्रन्दसी संयती विह्वयेते, ( यं ) परे अवरे उभयाः अमित्राः ( ह्वयन्ते ), ( यं ) समानं चिद् रथम् आतस्थिवांसा नाना हवेते, ( हे ) जनासः, स इन्द्रः ( अस्ति ) ।

हि० अ०—जिसको जोर से चिल्लाती हुई ( तथा ) एक साथ ( युद्ध में ) जाती हुई ( दोनों शत्रु-सेनायें ) विभिन्न प्रकार से बुलाती हैं; जिसको शक्तिशाली तथा कमजोर दोनों शत्रु-दल ( अपनी सहायता के लिये ) बुलाते हैं; जिसको एक ही रथ पर बैठे हुये दो रथी अलग-अलग ( अपनी सुरक्षा के लिये ) बुलाते हैं; हे मनुष्यो, वह इन्द्र है ।

*Trans*—Whom (the two armies) crying aloud encountering together, invoke divergently; (whom) both the enemies superior and inferior (invoke); (two charioteers) sitting on the self-same chariot invoke separately; O men, he is Indra.

*Notes*—क्रन्दसी—'Two crying aloud' (Sayaṇa), 'calling' (Wilson), 'two armies' (Griffith), 'two battle arrays' (Macdonell), : final ई is Pragṛhya ; hence, इति is added to it in the pada-text. संयती—√*i* with the prefix सम् 'to go together', pres. part : final ई is Pragṛhya ; hence, इति is added to it in the pada-text. In the pada-text the repetition is only to separate the two members from each other by avagraha. विह्वयेते—√*hvā* with वि 'to call divergently', pres. mid. 3rd dual, ; not unaccented because preceded by यम् ; final ए is Pragṛhya ; hence इति in the pada-text and the word being a compd. it is repeated after इति and analysed by *avagraha*. आतस्थिवांसा—'Perf. part., nom. dual of आतस्थिवस् from √*sthā* 'to stand', with the suffix क्वसु. हुवेते—√*hū* 'to call,' pres. mid. 3rd. dual ; final ए is Pragṛhya ; hence, इति in the pada-text.

यस्मान्न ऋते विजयन्ते जनासो
यं युध्यमाना अवसे हवन्ते ।
यो विश्वस्य प्रतिमानं बभूव
यो अच्युतच्युत्स जनास इन्द्रः ॥ ९ ॥

यस्मा॑त् । न । ऋ॒ते । वि॒ऽजय॑न्ते । जना॑सः । यम् । युध्य॑मानाः । अव॑से । हव॑न्ते ॥ यः । विश्व॑स्य । प्र॒ति॒ऽमान॑म् । ब॒भूव॑ । यः । अ॒च्यु॒त॒ऽच्युत् । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥ ९ ॥

सा० भा०—यस्मात् ऋते जनासः जनाः न विजयन्ते विजयं न प्राप्नुवन्ति । अतः युध्यमानाः युद्ध कुर्वाणा जनाः अवसे स्वरक्षणाय यम् इन्द्रं हवन्ते आह्वयन्ति । यः च विश्वस्य सर्वस्य जगतः प्रतिमानं प्रतिनिधिः बभूव । यः च अच्युतच्युत् अच्युतानां क्षयरहितानां पर्वतादीनां च्यावयिता सः इन्द्रः इत्यादि प्रसिद्धम् ॥

शब्दा०—यस्मात् = जिसके, न = नहीं, ऋते = बिना, विजयन्ते = विजय प्राप्त करते हैं, जनासः = मनुष्य, यम् = जिसको, युध्यमानाः = युद्ध करते हुये, अवसे = सहायता के लिये, हवन्ते = बुलाते हैं, यः = जो, विश्वस्य = सबका, प्रतिमानम् = प्रतिरूप, बभूव = हुआ, यः = जो, अच्युतच्युत् = स्थिर को गतिमान करनेवाला, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वयः—यस्माद् ऋते जनासः न विजयन्ते, यं युध्यमानाः अवसे हवन्ते, यः विश्वस्य प्रतिमानं बभूव, यः अच्युतच्युत्, ( हे ) जनासः, सः इन्द्रः ( अस्ति ) ।

हि० अ०—जिसके बिना मनुष्य विजय नहीं प्राप्त करते; जिसको युद्ध करते हुये ( सैनिक अपनी ) सहायता के लिये बुलाते हैं; जो सबका प्रतिरूप है; जो स्थिर को गतिमान करनेवाला है; हे मनुष्यो, वह इन्द्र है !

*Trans.*—Without whom men do not get victory ; whom the fighting ( soldiers ) call on for help ; who is the prototype of all ; who is the shaker of the immovable ; O men, he is Indra

*Notes*—वि॒जय॑न्ते—√*ji* with वि 'to conquer, mid. pres, 3rd. plu. ; not unaccented because preceded by यस्मात् . युध्य॑माना—Pres. part. from √*yudh* 'to fight' with the suffix शानच् . अव॑से—Dative infinitive in से from √*av* 'to protect'. हव॑न्ते—√*hū* 'to call, pres. mid. 3rd. plu. ; not unaccented because preceded by यम. ब॒भूव॑—√*bhū* 'to be . perf. 3rd. sing. ; not unaccented because preceded by यः . अ॒च्यु॒त॒च्युत्—Tatpuruṣa compd. accented on the second member.

यः शश्व॑तो मह्येनो॒ दधा॑ना-
नम॑न्यमाना॒ञ्छर्वा॑ ज॒घान॑ ।
यः शर्ध॑ते॒ नानु॒ददा॑ति शृ॒ध्यां
यो दस्यो॑र्ह॒न्ता स ज॑नास॒ इन्द्रः॑ ॥ १० ॥

यः । शश्व॑तः । महि॑ । एनः॑ । दधा॑नान् । अम॑न्यमानान् । शर्वा॑ । ज॒घान॑ ॥ यः । शर्ध॑ते । न । अ॒नु॒ऽददा॑ति । शृ॒ध्याम् । यः । दस्योः॑ । ह॒न्ता । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥ १० ॥

सा० भा०—यः महि महत् एनः पापं दधानान् शश्वतः बहून् अमन्यमानान् आत्मानमजानत इन्द्रमपूजयतो वा जनान् शर्वा । शृणाति शत्रूननेनेति शरुर्वज्रः । तेनायुधेन जघान । हन्तेर्लिटि रूपम् । यः च शर्धते उत्साहं कुर्वते अनात्मज्ञाय जनाय शृध्याम् उत्साहनीयं कर्म नानुददाति न प्रयच्छति । अनुपूर्वात् 'डुदाञ् दाने' जौहोत्यादिकः । 'अभ्यस्तानामादिः' 'तिङि चोदात्तवति' इति गतेर्निघातः । यः च दस्योः उपक्षपयितुः शत्रोः हन्ता घातकः सः इन्द्रः इत्यादि पूर्ववत् ॥

शब्दा०—यः = जिसने, शश्वतः = अनेक, महि = बड़ा, महान्, एनः = पाप, दधानान् = धारण करनेवालों को, अमन्यमानान् = आदर न करनेवालों को, अभिमानियों को, शर्वा = वज्र से, जघान = मारा, यः = जो, शर्धते = उत्साही के लिये, न = नहीं, अनुददाति = क्षमा करता है, शृध्याम् = उत्तेजनात्मक उत्साह को, यः = जो, दस्योः = दस्यु जाति को, हन्ता = मारनेवाला, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वयः—यः शश्वतः महि एनः दधानान् अमन्यमानान् ( जनान् ) शर्वा जघान, यः शर्धते शृध्यां न अनुददाति, यः दस्योः हन्ता, ( हे ) जनासः, सः इन्द्रः ( अस्ति ) ।

हि० अ०—जिसने अनेक भयानक पाप करनेवालों को, जो ( इसका ) आदर नहीं करते थे, अपने वज्र से मारा; जो उत्साही ( व्यक्ति ) के ( उत्तेजनात्मक ) उत्साह को क्षमा नहीं करता; जो दस्यु को मारने वाले हैं; हे मनुष्यो, वह इन्द्र है ।

*Notes.*—Who smote with thunderbolt many grievous sin-holders, offering no homage; who does not forgive the bold his (provoking) boldness; who is the killer of Dasyu: O men, he is Indra.

*Notes*—दधानान्—Pres part. acc. plu. of दधान which is formed from √*dhā* 'to put' with the suffix शानच्. अमन्यमानान्—Sāyaṇa explains it as 'आत्मानमजानत इन्द्रमपूजयतो वा', Wilson as 'offering (him) no homage', Griffith as 'ere they know their danger' and Macdonell as 'unexpecting' 'not thinking that he would slay them'. शर्वा—Instr. sing of शरु which is derived from √śṛ 'to kill' with the Uṇādi suffix उ. जघान—√*han* to kill; perf. 3rd. sing.; not unaccented because preceded by यः. शर्धते—'Bold' (Sāyana), 'who provokes' (Griffith), 'confident' (Wilson), 'arrogant' (Macdonell). Dative sing. of शर्धत् from √śṛdh 'to resist' with the suffix शतृ. अनुददाति—√*dā* with the prefix अनु 'to forgive'; not unaccented because preceded by यः, and hence compounded with the upasarga. शृध्याम्—'Boldness' (Sāyaṇa, Griffith), 'success' (Wilson), arrogance' (Macdonell).

यः शम्बरं पर्वतेषु क्षियन्तं
चत्वारिंश्यां शरद्यन्वविन्दत् ।
ओजायमानं यो अहिं जघान
दानुं शयानं स जनास इन्द्रः ॥ ११ ॥

यः । शम्बरम् । पर्वतेषु । क्षियन्तम् । चत्वारिंश्याम् । शरदि । अनुऽअविन्दत् ॥ ओजायमानम् । यः । अहिम् । जघान । दानुम् । शयानम् । सः । जनासः इन्द्रः ॥ ११ ॥

सा० भा०—यः पर्वतेषु क्षियन्तम् इन्द्रभिया बहून् संवत्सरान् प्रच्छन्नो भूत्वा पर्वतगुहासु निवसन्तं शम्बरम् एतन्नामकं मायाविनमसुरं चत्वारिंश्यां

शरदि चत्वारिंशे संवत्सरे अन्वविन्दत् अन्विष्यालभत। लब्ध्वा च यः ओजायमानम्। 'कर्तुः क्यङ् सलोपश्च', 'ओजसोऽप्सरसो नित्यम्' (पा० सू० ३. १. ११. २) इति सकारलोपः। बलमाचरन्तम् अहिम् आहन्तारं दानुं दानवं शयानं शम्बरमसुरं जघान हतवान् सः इन्द्रः नाहमिति ॥

शब्दा०—यः = जो, शम्बरम् = शम्बर को, पर्वतेषु = पर्वतों पर, क्षियन्तम् = निवास करनेवाले, चत्वारिंश्याम् = चालीसवें, शरदि = शरद् ऋतु में, वर्ष में, अन्वविन्दत् = ढूंढ़ निकाला, ओजायमानम् = पराक्रम दिखानेवाले को, यः = जिसने, अहिम् = अहि नाम के राक्षस को, जघान = मारा, दानुम् = दानु के पुत्र को, शयानम = पड़े हुये, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र।

अन्वयः—यः पर्वतेषु क्षियन्त शम्बरं चत्वारिंश्यां शरदि अन्वविन्दत् यः ओजायमानम् अहिं, शयानं दानुं जघान, (हे) जनासः सः इन्द्रः (अस्ति)।

हि० अ०—जिसने पर्वतों पर निवास करनेवाले शम्बर को चालीसवें शरद् ऋतु में ढूंढ़ निकाला; जिसने (अपना) पराक्रम दिखानेवाले अहि को मारा; पड़े हुये दानु के पुत्र को (मारा); हे मनुष्यो, वह इन्द्र है।

*Trans.*—Who discovered out Sambara dwelling in the mountains in fortieth autumn; who smote Ahi, displaying his vigour, and son of Dānu lying; O men, he is Indra.

*Notes*—क्षियन्तम्—Acc sing. of क्षियत्, from √*kṣi* 'to dwell', with the suffix शतृ. अन्वविन्दत्—√ *vid* to find, impf. 3rd. sing.; not unaccented because preceded by यः. चत्वारिंश्यां शरदि—The commentators explain it as 'in forty autumns'. i. e. years. Tilak, however, takes it as to mean 'at the fortieth day of autumn According to him, Indra killed a demon called Sambara on the fortieth day of autumn. ओजायमानम् From denom. base √ *ojāya* 'to display vigour' with the suffix शानच्. जघान—√ *han* 'to kill' perf. 3rd. sing.; not unaccented because preceded by यः. शयानम्—√*śī* to lie. mid. pres. part.

यः सप्तरश्मिर्वृषभस्तुविष्मा-
नवासृजत्सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहु-
र्द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥

यः । सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे । सप्त । सिन्धून् । यः रौहिणम् । अस्फुरत् । वज्रऽबाहुः । द्याम् । आऽरोहन्तम् । सः । जनासः । इन्द्रः ॥ १२ ॥

सा० भा०—यः सप्तरश्मिः सप्तसंख्याकाः पर्जन्या रश्मयो यस्य ते च रश्मयः । 'वराहवः स्वतपसो विद्युन्महसो धूपयः श्वापयो गृहमेधाश्चेत्येते ये चेमेऽशिमिविद्विषः पर्जन्याः सप्त पृथिवीमभिवर्षन्ति वृष्टिभिः' ('तै० आ० १. ९. ४-५ ) इति तैत्तिरीयारण्यके ह्याम्नाताः । वृषभः वर्षकः तुविष्मान् वृद्धिमान् बलवान् वा सप्त सर्पणस्वभावान् सिन्धून् अपः सर्तवे सरणाय अवासृजत् अवसृष्टवान् । यद्वा गङ्गाद्याः सप्त मुख्या नदीरसृजत् । यः च वज्रबाहुः सन् द्यां दिवम् आरोहन्तं रौहिणम् असुरम् अस्फुरत् जघान ॥ 'स्फुर स्फुरणे' तुदादिः ॥

शब्दा०—यः = जिसने, सप्तरश्मिः = सात किरणोंवाले, वृषभः = वर्षा करनेवाले, तुविष्मान = बलवान्, अवासृजत् = मुक्त किया, सर्तवे = बहने के लिये, सप्त = सात, सिन्धून् = नदियों को, यः = जिसने, रौहिणम् = रौहिण नामक अनावृष्टि के राक्षस को, अस्फुरत् = झटका दिया, वज्रबाहुः = हाथ में वज्र धारण करनेवाले ने, द्याम् = आकाश पर, आरोहन्तम् = चढ़ते हुये, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वय—यः सप्तरश्मिः वृषभः तुविष्मान् सप्त सिन्धून् सर्तवे अवासृजत् ; यः वज्रबाहुः द्याम् आरोहन्तम् रौहिणम् अस्फुरत्, ( हे ) जनासः, सः इन्द्रः ( अस्ति ) ।

हि० अ०—जिस सात किरणोंवाले, बलवान् ने सात नदियों को बहने के लिये मुक्त किया; जिस वज्र धारण करनेवाले ने आकाश पर चढ़ते हुये रौहिण को झटका दिया; हे मनुष्यो, वह इन्द्र है ।

***Trans.***—Who, the seven-rayed, the showerer, the powerful, set free the seven rivers to flow; who, armed with the thunderbolt, jerked Rauhina, ascending heaven : O men, he is Indra.

***Notes***—सप्तरश्मिः—Bahuvrīhi compd. accented on the first member. Sāyaṇa understands it to mean 'having seven kinds of clouds that pour rain on the earth' ; Macdonell thinks it probable to mean 'hard to restrain', 'irresistible' ; according to Ludwig, seven rays are the seven forms of Indra. तुविष्मान्—The suffix मतुप् is not separated from the stem by avagraha ( see मनस्वान् . II. 12.1 ). अवासृजत्—√ *sṛj* 'to emit', impf. 3rd. sing. ; not unaccented because preceded by यः. सर्तवे—Dative infinitive in तवे from √*sṛ* 'to flow'. अस्फुरत्—√ *sphur* 'to jerk,' impf. 3rd. sing. ; not unaccented because preceded by यः. वज्रबाहुः—Bahuvrīhi compd. accented on the first member. आरोहन्तम्—√*ruh* 'to ascend.' with the suffix शतृ, acc. sing.

द्यावा चिदस्मै पृथिवी नमेते
शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहु-
र्यो वज्रहस्तः स जनास इन्द्रः ॥ १३ ॥

द्यावा । चित् । अस्मै । पृथिवी इति । नमेते इति । शुष्मात् । चित् । अस्य । पर्वताः । भयन्ते ॥ यः । सोमऽपाः । निऽचितः । वज्रऽबाहुः । यः । वज्रऽहस्तः । सः । जनासः । इन्द्रः ॥ १३ ॥

सा० भा०—अस्मै इन्द्राय द्यावा पृथिवी । इतरेतरापेक्षया द्विवचनं 'प्र मित्रयोर्वरुणयोः' ( ऋ० सं० ७. ६६. १ ) इतिवत् । नमेते स्वयमेव प्रह्वी-भवतः । 'णमु प्रह्वत्वे' । कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' इति यकः प्रतिषेधः । चित् अपि च अस्य इन्द्रस्य शुष्मात् बलात् पर्वताः भयन्ते

विभ्यति । यः सोमपाः सोमस्य पाता निचितः सर्वैः । यद्वा अन्येभ्योऽपि देवेभ्यो दृढाङ्गः । वज्रबाहुः वज्रसदृशबाहुः । यः च वज्रहस्तः वज्रयुक्तः सः इन्द्रः इत्यादि प्रसिद्धम् ॥

शब्दा०—द्यावा = आकाश, चित् = भी, अस्मै = इसके सामने, पृथिवी = पृथिवी, नमेते = झुकते हैं, शुष्मात् = पराक्रम के सामने, चित् = भी, अस्य = इसके, पर्वताः = पर्वत, भयन्ते = भयभीत हो जाते हैं, यः = जो, सोमपाः = सोमपान करनेवाला, निचितः = पीसकर निचोड़े गये, वज्रबाहुः = वज्र-सदृश भुजावाला, यः = जो, वज्रहस्तः = हाथ में वज्र धारण करनेवाला, सः = वह, जनासः = हे मनुष्यो, इन्द्र = इन्द्र ।

अन्वय—द्यावापृथिवी चिद् अस्मै नमेते । अस्य शुष्मात् पर्वताः चित् भयन्ते । यः वज्रबाहुः निचितः सोमपाः, यः वज्रहस्तः, ( हे ) जनासः सः इन्द्रः ( अस्ति ) ।

हि० अ०—इसके सामने आकाश तथा पृथिवी भी झुकते हैं; इसके पराक्रम के सामने पर्वत भी भयभीत हो जाते हैं; जो वज्र-सदृश भुजावाला है, सोम पौधे को ( पीसकर ) निकाले गये सोम रस का पान करनेवाला है; जो हाथ में वज्र धारण करनेवाला है; हे मनुष्यो, वह इन्द्र है ।

*Trans.*—Even heaven and earth bow down before him ; even the mountains fear before his power ; who, the thunder-armed, is the drinker of Soma juice, extracted ( from Soma plant ) ; who is the wielder of thunderbolt in his hands ; O men, he is Indra.

*Notes*—द्यावा पृथिवी—The word दिव becomes द्यावा in the Dvandva compd. in which both the members are the names of deities ( दिवो द्यावा Pāṇ VI. 3.29 ). Here, as often, the two members of Devatā-dvandva compd. are separated by other words which come in between the two. Final ई of पृथिवी is Pragṛhya ; hence, इति in the pada-text. नमेते—√*nam* 'to bend' pres. mid. 3rd dual ; final ए is Pragṛhya ; hence, इति in the pada-text. भयन्ते—√*bhī* 'to fear' pres. mid. 3rd. plu. सोमपाः—Tatpuruṣa compd. accented on the second member. निचितः—√*ci* with नि 'to pile up,' to heap

up, past part. Sāyaṇa takes it to mean 'all', Wilson as 'the firm (of frame)', Griffith and Macdonell as 'known'. past passive part., when compounded with preposition, shifts its accent to preposition; but it retains, when the preposition, prefixed, is not used independently.

यः सुन्वन्तमवति यः पचन्तं
यः शंसन्तं यः शशमानमूती ।
यस्य ब्रह्म वर्धनं यस्य सोमो
यस्येदं राधः स जनास इन्द्रः ॥ १४ ॥

यः । सुन्वन्तम् । अवति । यः । पचन्तम् । यः । शंसन्तम् । यः । शशमानम् । ऊती ॥ यस्य । ब्रह्म । वर्धनम् । यस्य । सोमः । यस्य । इदम् । राधः । सः । जनासः । इन्द्रः ॥ १४ ॥

सा० भा०—यः सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानम् अवति रक्षति । यः च पुरोडाशादीनि हवींषि पचन्तं यः च ऊती ऊतये । 'सुपां सुलुक्' इति चतुर्थ्याः पूर्वसवर्णदीर्घः । स्वरक्षायै शस्त्राणि शंसन्तं यः च शशमानम् अवति स्तोत्रं कुर्वाणं रक्षति । ब्रह्म परिवृढं स्तोत्रं यस्य वर्धनं वृद्धिकरं भवति । तथा यस्य सोमः वृद्धिहेतुर्भवति । यस्य च इदम् अस्मदीयं राधः पुरोडाशादि-लक्षणमन्नं वृद्धिकरं भवति । सः इन्द्रः इत्यादि प्रसिद्धम् ॥

शब्दा०—यः = जो, सुन्वन्तम् = पीसनेवाले को, अवति = रक्षा करता है, यः = जो, पचन्तम् = पुरोडाशादि हविरन्न पकानेवाले को, यः = जो, शंसन्तम् = प्रशंसा करनेवाले को, यः = जो, शशमानम् = परिश्रम करने-वाले को, ऊती = सहायता से, यस्य = जिसका, ब्रह्म = प्रार्थना, वर्धनम् = वृद्धि करनेवाला, यस्य = जिसका, सोमः = सोम, यस्य = जिसका, इदम् = यह, राधः = धन, सः = वह, जनासः = हे मनुष्यो, इन्द्रः = इन्द्र ।

अन्वय—यः सुन्वन्तम् अवति, यः पचन्तम्, यः ऊती शंसन्तं, यः शशमानम् ( अवति ), यस्य ब्रह्म वर्धनं ( भवति ), यस्य सोमः, यस्य इदं राधः, ( हे ) जनासः, सः इन्द्रः ( अस्ति ) ।

हि॰ अ॰—जो सोम पीसनेवाले की रक्षा करता है, जो (पुरोडाश) पकाने वाले की, जो प्रशंसा करनेवाले की, जो परिश्रम करनेवाले की (अपनी) सहायता से (रक्षा करता है); जिसकी वृद्धि करनेवाला स्तोत्र है, जिसकी (वृद्धि करनेवाला) सोम है, जिसकी (वृद्धि करनेवाला) यह सम्पूर्ण धन है; हे मनुष्यो, वह इन्द्र है।

*Trans*—Who protects the Soma-pressing (sacrificer), who (protects) the baking (sacrificer), who (protects) the praising (sacrificer), who (protects) the toiling (sacrificer) with protection; whose strengthener is the prayer, whose Soma, whose this treasure; O men, he is Indra.

*Notes*—सुन्वन्तम्—Pres. part. acc. sing. of सुन्वत् from √*su* 'to press' with the suffix शतृ. अवति—√*av* 'to protect,' pres. 3rd. sing.; not unaccented because preceded by यः पचन्तम्—Pres. part. acc. sing. of पचत् from √*pac* 'to bake' with the suffix शतृ शंसन्तम्—Pres. part. acc. sing. of शंसत् from √*śaṁs* to praise' with the suffix शतृ. शशमानम्—Perf. part. acc. sing. from √*śam* 'to labour' with the suffix कानच्. Sāyaṇa takes it to mean 'स्तोत्रं कुर्वाणं'; Nighaṇṭu enumerates it in the list of the verbs meaning 'to sing' (Nigh. III. 14.22); Yāska takes it as शंसमानम्, Praising (Nir. VI. 8). ऊती—Instr. sing. of ऊति from √*av* 'to protect', by Samprasāraṇa.

यः सुन्वते पचते दुध्र आ चि-
द्वाजं ददर्षि स किलासि सत्यः।
वयं त इन्द्र विश्वह प्रियासः
सुवीरासो विदथमा वदेम ॥ १५ ॥

यः। सुन्वते पचते। दुध्रः। आ। चित्। वाजम्। ददर्षि

सः । किल । असि । सत्यः ॥ वयम् । ते । इन्द्र । विश्वह । प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥ १५ ॥

सा० भा०—इदानीमृषिः साक्षात्कृतमिन्द्रं प्रति ब्रूते । हे इन्द्र यः दुध्रः दुर्धरः सन् सुन्वते सोमाभिषवं कुर्वते पुरोडाशादिहवींषि पचते यजमानाय वाजम् अन्नं बलं वा आ दर्दर्षि भृशं प्रापयसि सः तादृशस्त्वं सत्यः यथार्थभूतः असि न पुनर्नास्तीति बुद्धियोग्योऽसि । किल इति प्रसिद्धौ । ते तव प्रियासः सुवीरासः कल्याणपुत्रपौत्राः सन्तः वयं विश्वह सर्वेष्वहःसु विदथं स्तोत्रम् आ वदेम ब्रूयाम ॥

शब्दा०—यः = जो, सुन्वते = सोम पीसनेवाले के लिये, पचते = पुरोडाशादि पकानेवाले के लिये, दुध्रः = भयानक, चित् = आदर अर्थ में प्रयुक्त निपात, आ दर्दर्षि = बार-बार देते हो, सः = वह, किल = निश्चित रूप से, असि = हो, सत्यः = सत्यस्वरूप, वयम् = हमलोग, ते = तुम्हारे, इन्द्र = हे इन्द्र, विश्वह = सर्वदा, प्रियासः = प्रिय, सुवीरासः = सुन्दर वीरों से युक्त, विदथम् = स्तोत्र, आ वदेम = बोलें ।

अन्वय—( हे ) इन्द्र, यः दुध्रः ( सन् ) पचते वाजम् आ दर्दर्षि सः ( त्वम् ) सत्यः किल असि । ते प्रियासः सुवीरासः वयं विश्वह विदथम् आ वदेम ।

हि० अ०—जो भयानक तुम सोम पीसनेवाले के लिये तथा ( पुरोडाश ) पकानेवाले के लिये बार-बार धन लाते हो, वह तुम निश्चित ही सत्य हो । हे इन्द्र, तुम्हारे प्रिय हमलोग सुन्दर बहादुर पुत्रों से युक्त होकर सर्वदा सुन्दर स्तोत्र बोलें ।

*Trans.*—Who, the fierce one gives food to the Soma-presser and to the baking one ; thou as such, indeed, art true. O Indra, may we, dear to thee, having hero sons, ever speak the hymn.

*Notes*—सुन्वते—Dative sing. of सुन्वत् from √*su* 'to press' Soma with the suffix शतृ. पचते—Dative sing. of पचत् from √*pac* 'to bake' with the suffix शतृ. दर्दर्षि—√*dṛ* 'to pierce', intensive 2nd. sing. ; not unaccented, because syntactically connected with यः. सः असि—The use of 3rd person pronoun with the verb of 2nd person. ( see note on सा Ṛv. I. 48. 10 ).

# RUDRA

चतुर्थेऽनुवाके एकादश सूक्तानि। तत्र 'आ ते पितः' इति पञ्चदशर्चं प्रथमं सूक्तं गृत्समदस्यार्षं त्रैष्टुभं रौद्रम्। अनुक्रान्तं च—'आ ते पञ्चोना रौद्रम्' इति। शूलगवादिरुद्रयज्ञेषु अनेन सूक्तेन प्रतीची दिगुपस्थेया। सूत्रितं च—'कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम्' (आश्व० गृ० ४.८.२३) इति रुद्रदेवत्ये पशौ 'आ ते पितः' इति हविषोऽनुवाक्या। सूत्रितं च—'आ ते पितर्मरुतां सुम्नमेतु प्र बभ्रवे वृषभाय श्वितीच इति तिस्रः' (आश्व० श्रौ० ३.८) इति। अत्र शौनकः—चतुर्दशीमुपोष्यैकां कृष्णस्य जुहुयाच्चरुम्। आतेसूक्तेन रौद्रेण प्रत्यृचं वाग्यतः शुचिः॥ पूर्वमाज्याहुतीर्हुत्वाथोपस्थाय च शंकरम्। हविःशेषेण वर्तेत एकान्तरमतन्द्रितः॥ पूर्णमासे जयेन्मृत्युं रोगैश्च परिमुच्यते (ऋग्वि० १. १६८-१७०) इति।

आ ते॑ पितर्मरुतां सु॒म्नमे॑तु

मा न॒ः सूर्य॑स्य स॒न्दृशो॑ युयोथाः।

अ॒भि नो॑ वी॒रो अर्व॑ति क्षमे॒त

प्र जा॑येमहि रुद्र प्र॒जाभि॑ः॥ १॥

आ। ते। पि॒तः। म॒रु॒ता॒म्। सु॒म्न॒म्। ए॒तु। मा। न॒ः। सूर्य॑स्य। स॒म्ऽदृश॑ः। यु॒यो॒थाः॥ अ॒भि। न॒ः। वी॒रः। अर्व॑ति। क्ष॒मे॒त। प्र। जा॒ये॒म॒हि॒। रु॒द्र॒। प्र॒ऽजाभि॑ः॥ १॥

सा० भा०—हे मरुतां पितः मरुत्संज्ञानां देवानामुत्पादक रुद्र। 'परमपि छन्दसि' इति षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावात् सर्वानुदात्तत्वम्। ते त्वदीयमस्मभ्यं दातव्यं सुम्नं सुखम् आ एतु आगच्छतु। रुद्रस्य च मरुतां पितृत्वम् 'इदं पित्रे मरुताम्' (ऋ० सं० १. ११४.६) इत्यत्राख्यायिकामुखेनावादिष्म। तथा त्वं नः अस्मान् सूर्यस्य संदृशः संदर्शनात् मा युयोथाः मा

पृथक्कार्षीः । 'यु मिश्रणामिश्रणयोः' । लङि छान्दसः शपः श्लुः । 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन ङित्त्वाभावात् गुणः । अर्वति शत्रौ । 'भ्रातृव्यो वा अर्वा' ( तै॰ सं॰ ६. ३. ८. ४ ) इति श्रुतेः । नः अस्माकं वीरः वीर्यवान् पुत्रादिः अभि क्षमेत अभिभवतु । यद्वा वीरस्त्वं नोऽस्मानभिक्षमेथाः अस्मान् कृतापराधानभिक्षमस्व । हे रुद्र प्रजाभिः पुत्रपौत्रादिभिः प्र जायेमहि प्रभूताः स्याम ।

शब्दा॰—ते = तुम्हारा, पितर्मरुताम् = हे मरुतों के पिता, सुम्नम् = सुख, आ एतु = आवे, मा = मत, नः = हम लोगों को, सूर्यस्य = सूर्य की, संदृशः = दृष्टि से, युयोथाः = अलग करो, नः = हमारे, वीरः = बहादुर (पुत्र पौत्रादि ), अर्वति = शत्रु को, अभिक्षमेत = पराजित करें, प्र जायेमहि = वृद्धि को प्राप्त करें, रुद्र = हे रुद्र, प्रजाभिः = संतति द्वारा ।

अन्वय—( हे ) मरुतां पितः, ते सुम्नम् आ एतु । सूर्यस्य संदृशः नः मा युयोथाः । नः वीरः अर्वति अभि क्षमेत । ( हे ) रुद्र ( वयम् ) प्रजाभिः प्रजायेमहि ।

हि॰ अ॰—हे मरुतों के पिता ( रुद्र ), तुम्हारे ( द्वारा प्रदत्त ) सुख ( हमारे पास ) आवे । सूर्य की दृष्टि से हमको अलग मत करो । हमारे वीर ( पुत्र, पौत्रादि ) शत्रु को पराजित करें; हे रुद्र, हम संतति से वृद्धि को प्राप्त करें ।

*Trans.*—O father of the Maruts, may thy bliss come ( to us ); separate us not from the sight of the sun. May our heroes overcome the enemies; O Rudra, we be multiplied with offsprings.

*Notes*—पितर्मरुताम्—See notes on दुहितर्दिवः ( I. 48.1 ). एतु √*i* 'to go,' impv. 3rd. sing. युयोथाः—√*yu* 'to separate,' Ātm, 3rd conjugation, aorist, injun. 2nd, sing. अभि नो वीरो अर्वति क्षमेत—Wilson following Sāyaṇa renders, our valiant ( descendants ) may overcome ( these ) foes ' Sāyaṇa takes it also to mean 'may the valiant ( Rudra ) forgive our sins committed'; Griffith translates, 'gracious to our fleet courses be the Hero'. According to Ludwig, 'let our brave son be mighty with the charger'. क्षमेत—√*kṣam* 'to endure, Ātm. opt. 3rd. sing. जायेमहि—√*jā*(>*jan*) 'to be born.' Ātm, 1st plu. opt.

त्वाद॑त्तेभी रुद्र शन्त॑मेभिः
शतं हिमा॑ अशीय भेषुजेभि॑ः ।
व्य१स्मद्द्वेषो॑ वितुरं व्यंहो॑
व्यमी॑वाश्चातयस्वा विषू॑चीः ॥ २ ॥

त्वाऽद॑त्तेभिः । रुद्र । शम्ऽत॑मेभिः । शुतम् । हिमा॑ः । अशीय ।
भेषुजेभि॑ः ॥ वि । अस्मत् । द्वेष॑ः । वि॒ऽतरम् । वि । अंह॑ः । वि ।
अमी॑वाः । चातयस्व । विषू॑चीः ॥ २ ॥

सा० भा०—हे रुद्र त्वादत्तेभिः त्वया दत्तैः शंतमेभिः अतिशयेन सुखकरैः भेषजेभिः भेषजैरौषधैः शतं हिमाः शतं हेमन्तान् शतसंवत्सरान् अशीय व्याप्नुयाम् । अश्नोतेर्लिङि छान्दसो विकरणस्य लुक् । अपि च अस्मत् अस्मत्तः द्वेषः द्वेष्टॄन् वि चातयस्व विनाशय । तथा अंहः पापं वितरम् अत्यन्तं विचातयस्व । अमीवाः रोगान् विषूचीः विषु नाना अञ्चतीः कृत्स्नशरीर-व्यापकान् रोगान् विचातयस्व अस्मत्तः पृथक्कृत्य विनाशय ॥

शब्दा०—त्वादत्तेभिः=तुम्हारे द्वारा प्रदत्त, रुद्र=हे रुद्र, शंतमेभिः=कल्याणकारी, शतम्=सौ, हिमाः=शरद् ऋतु, अशीय=प्राप्त करें, भेषजेभिः=औषधियों से, अस्मत्=हमसे, द्वेषः=शत्रुओं को, वितरम्=अत्यन्त, अंहः=पाप को, अमीवाः=रोगों को, वि चातयस्व=नष्ट करो, विषूचीः=सम्पूर्ण शरीर में व्याप्त रहनेवाले ।

अन्वय—(हे) रुद्र, त्वादत्तेभिः शंतमेभिः भेषजेभिः (अहम्) शतं हिमाः अशीय । द्वेषः अस्मत् वितरं वि (चातयस्व), अंहः वि (चातयस्व), अमीवाः वि चातयस्व ।

हिं० अ०—तुम्हारे द्वारा प्रदत्त कल्याणकारी औषधियों से, हे रुद्र, (हम) सौ शरद् ऋतु (वर्ष की आयु) प्राप्त करें । शत्रुओं को हमसे दूर कर अत्यन्त रूप से नष्ट करो; पापों को पूर्णतया नष्ट करो; सम्पूर्ण शरीर में व्याप्त रोगों को नष्ट करो ।

*Notes*—O Rudra, with the most auspicious medicines, given by thee, may I attain the hundred winters (i.e. years).

Remove far away from us the enemies; completely remove sin (committed); remove all-pervading diseases

*Notes*—त्वादत्तेभी—Tatpuruṣa compd. accented on the first member (तृतीया कर्मणि—Pāṇ. 1.2.48); when visarjanīya is followed by *repha* the former is dropped and the vowel preceding it is lengthened. This euphonic combination has been called *Niyata* in the Ṛgvedaprātiśākhya. अशीय—√ *aṁś* 'to attain', 'root'-aorist, Atm. opt. 1st. sing. वितरम्—Wilson takes it as an adjective of अंहः. Here Wilson differs from Sāyaṇa who thinks वितरम् as an adverb which modifies the verb चातयस्व. According to Macdonell it is the comparative form of वि, which means 'farther'. चातयस्व—√ *cat* 'to destroy' Atm. caus. impv., 2nd. sing. विषूचीः—From विष्वक् + √ *añc* 'to go in various directions'; व becomes उ by samprasāraṇa. When अञ् of अञ्च् is dropped the preceding syllable is lengthened. व्युस्मत्—See व्युषिनः (ṚV.I.48.6).

श्रेष्ठो जातस्य रुद्र श्रियासि
तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति
विश्वा अभीती रपसो युयोधि ॥ ३ ॥

श्रेष्ठः । जातस्य । रुद्र । श्रिया । असि । तवःऽतमः । तवसाम् । वज्रबाहो इति वज्रऽबाहो ॥ पर्षि । नः । पारम् । अंहसः । स्वस्ति । विश्वाः । अभिऽइतीः । रपसः । युयोधि ॥ ३ ॥

सा० भा०—हे रुद्र जातस्य उत्पन्नस्य सर्वस्य जगतो मध्ये श्रिया ऐश्वर्येण श्रेष्ठः प्रशस्यतमः असि भवसि । तथा हे वज्रबाहो आयुधहस्त रुद्र तवसां प्रवृद्धानां मध्ये तवस्तमः अतिशयेन प्रवृद्धोऽसि । स त्वं नः अस्मान् अंहसः पापस्य पारं तीरं स्वस्ति क्षेमेण पर्षि पारय । तथा रपसः पापस्य विश्वाः सर्वाः अभीतीः

अभिगमनानि युयोधि पृथक्कुरु ॥ यौतेश्छान्दसः शपः श्लुः । 'वा छन्दसि' इति अपित्त्वस्य विकल्पनात् ङित्त्वाभावे 'अङितश्च' इति हेर्धिः ॥

शब्दा०—श्रेष्ठः = सबसे अच्छा, जातस्य = उत्पन्न होनेवाले का, रुद्र = हे रुद्र, श्रिया = यश से, असि = हो, तवस्तमः = सबसे शक्तिमान, तवसाम् = शक्तिशालियों में, वज्रबाहो = हे वज्रधारण करनेवाले, पर्षि = पार करो, नः = हम लोगों को, पारम् = पार, अंहसः = पाप से, स्वस्ति = सुरक्षापूर्वक, विश्वाः = सम्पूर्ण, अभीतीः = प्रहारों से, रपसः = पाप के, युयोधि = अलग करो ।

अन्वय—( हे ) रुद्र, जातस्य श्रिया श्रेष्ठः असि; ( हे ) वज्रबाहो, तवसां तवस्तमः ( असि ); ( अत एव ) नः अहंसः पारं स्वस्ति पर्षि ( तथा ) रपसः विश्वा अभीतीः युयोधि ।

हि० अ०—हे रुद्र, यश में उत्पन्न प्राणियों में तुम सर्वश्रेष्ठ हो; हे वज्रधारण करनेवाले, शक्तिशालियों में तुम सबसे शक्तिमान् हो। सुरक्षापूर्वक पाप के समुद्र से हमें पार करो; पाप के सम्पूर्ण प्रहारों से दूर करो ।

*Trans.*—The best of beings ( thou ) art, O Rudra, in glory : ( thou art ) the mightiest of the mighties, O wielder of the thunder-bolt. Pass us in safety over the ( ocean of ) sin ; keep us apart from all the attacks of mischief.

*Notes*—वज्रबाहो—The final ओ of the vocative is treated as Pragṛhya in the pada-text ; hence, इति follows. वज्रबाहो is repeated after इति in the pada-text only to separate the two members by avagraha. पर्षि—√*pṛ* 'to take across', 2nd. sing.; in form it is present indicative, but impv. in sense. स्वस्ति—It is not analysed in the pada-text, because अस्ति does not occur as an independent substantive. अभीतीः—अभि + √*i* 'to go' with the suffix क्तिन् ; when two short इ-s, first with Udātta accent and second with Anudātta, are coalesced into long ई, the resulting accent is Svarita which is called *Praśliṣṭa Svarita*. युयोधि—√*yu* 'to separate', pres. impv. 2nd. sing.

मा त्वा रुद्र चुक्रुधामा नमोभि-
र्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभि-
र्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥

मा । त्वा । रुद्र । चुक्रुधाम । नमःऽभिः । मा । दुःऽस्तुती । वृषभ । मा । सऽहूती ॥ उत् । नः । वीरान् । अर्पय । भेषजेभिः । भिषक्ऽतमम् । त्वा । भिषजाम् । शृणोमि ॥ ४ ॥

सा० भा०—हे रुद्र त्वा त्वां नमोभिः अयथाक्रियमाणैर्नमस्कारैर्हविर्भिर्वा मा चुक्रुधाम मा क्रोधयाम क्रुद्धं मा कार्ष्म । 'क्रुध कोपे' । अस्माण्ण्यन्तात् लुङि चङि रूपम् । हे वृषभ कामानां वर्षितः दुष्टुती दुःस्तुत्या अशोभनया स्तुत्या मा चुक्रुधामेत्येव । तथा सहूती सहूत्या विसदृशैरन्यैर्देवैः सहाह्वानेन मा क्रोधयाम । श्रेष्ठो हि स्वस्मान्न्यूनेन सहाह्वाने क्रुद्धो भवति । स त्वं नः अस्माकं वीरान् पुत्रान् भेषजेभिः त्वदीयैर्भेषजैरौषधैः उत् अर्पय उत्कृष्टं संयोजय । हे रुद्र त्वा त्वां भिषजां चिकित्साभिज्ञानां मध्ये भिषक्तमम् अतिशयेन भैषज्यस्य कर्तारं शृणोमि । 'प्रथमो दैव्यो भिषक्' ( तै० सं० ४.१.१.२; वा० सं० १६.५ ) इति च मन्त्रान्तरेऽप्युक्तम् ॥ ४ ॥

शब्दा०—मा = मत, त्वा = तुमको, चुक्रुधाम = क्रोधित करें, उत्तेजित करें, नमोभिः = (अधूरी) स्तुतियों द्वारा, मा = मत, दुष्टुती = अयोग्य स्तुतियों द्वारा, वृषभ = हे शक्तिशाली, मा = मत, सहूती = अन्य महत्वहीन देवताओं की एक साथ स्तुति द्वारा, नः = हमारे, वीरान् = पुत्र पौत्रादिकों को, उदर्पय = उत्कृष्ट करो, भेषजेभिः = औषधियों से, भिषक्तमम् = सर्वश्रेष्ठ वैद्य, त्वा = तुमको, भिषजाम् = वैद्यों में, शृणोमि = सुनता हूं ।

अन्वय—( हे ) रुद्र, ( वयम् ) नमोभिः त्वा मा चुक्रुधाम; ( हे ) वृषभ, दुष्टुती मा ( चुक्रुधाम ), सहूती मा ( चुक्रुधाम ) । ( हे रुद्र, ) नः वीरान् भेषजेभिः उद् अर्पय । त्वा भिषजां भिषक्तमं शृणोमि ।

हि० अ०—हे रुद्र, ( अपूर्ण ) प्रार्थनाओं से ( हम ) तुमको उत्तेजित न करें; हे शक्तिशाली, अयोग्य स्तुतियों द्वारा न ( क्रोधित करें ); ( अन्य महत्व-हीन देवताओं की ) सहस्तुतियों द्वारा न ( क्रोधित करें ) । हमारे वीरों ( पुत्र

पौत्रादिकों ) को अपनी औषधियों से उत्कृष्ट करो, ( क्योंकि ) तुमको वैद्यों में सबसे बड़ा वैद्य सुनता हूँ।

*Trans.*—O Rudra, let us not provoke ( thee ) with ( inadequate ) salutations ; not with unworthy praise ; not with joint invocations ( of other inferior deities ). O mighty. Strengthen our heroes ( offsprings ) with ( thy ) medicines, ( for ) I hear of thee ( as ) the best physician of physicians.

*Notes*—चुक्रुधाम—√*krudh* 'to be angry', 'red.'-aorist, subju. 1st. plu. Being subju. in form, in the pres nt context, with the prohibitive particle मा, it is injunctive. दुष्टुंती—Instr. sing. of दुष्टुति; stems ending in इ very often lengthen the final vowel in the Instr. sing. सहूंती—Instr. sing. of सहूति from समान + हूति (√ हू + क्तिन्). उर्दर्पय—उद् + √*ṛ*. 'to strengthen', caus. impv. 2nd. sing. श्रृणोमि—√*śru* 'to hear', pres. 1st. sing.

हवीमभिर्हवते यो हविर्भि-
रव स्तोमेभी रुद्रं दिषीय।
ऋदूदरः सुहवो मा नो अस्यै
बभ्रुः सुशिप्रो रीरधन्मनायै ॥ ५ ॥

हवीमऽभिः। हवते। यः। हविःऽभिः। अव। स्तोमेभिः। रुद्रम्। दिषीय॥ ऋदूदरः। सुऽहवः। मा। नः। अस्यै। बभ्रुः। सुऽशिप्रः। रीरधत्। मनायै ॥ ५ ॥

सा० भा०—यः रुद्रः हविर्भिः चरुपुरोडाशादिभिः सहितैः हवीमभिः आह्वानैः स्तुतिलक्षणैः हवते आहूयते स्तूयते व्यत्ययेन कर्मणि कर्तृप्रत्ययः। 'बहुलं छन्दसि' इति ह्वयतेः संप्रसारणम्। तं रुद्रं स्तोमेभिः स्तोत्रैः अव दिषीय अवखण्डयामि पृथक्करोमि। अपगतक्रोधं करोमीति यावत्। 'दो अवखण्डने'। व्यत्ययेनात्मनेपदम्। 'बहुलं छन्दसि' इतीत्वम्। ऋदूदरः। 'ऋदूदरो मृदूदरः' ( निरु० ६. ४ ) इति यास्कः। सुहवः शोभनाह्वानः बभ्रुः भर्ता सर्वस्य बभ्रुवर्णो

वा । सुशिप्रः । शिप्रे हनू नासिके वा । शोभनशिप्रः । एवंगुणविशिष्टः स रुद्रः अस्यै मनायै । हन्मीति मन्यमाना बुद्धिर्मना । तस्यै नः अस्मान् मा रीरधत् । मा वशं नैषीत् । 'रध हिंसासंराद्धयोः' । अस्माण्ण्यन्तात् लुङि चङि रूपम् । 'रध्यतिर्वशगमने' इति यास्कः ।

शब्दा०—हवीमभिः = आह्वानों द्वारा, हवते = पूजा जाता है, बुलाया जाता है, यः = जो, हविर्भिः = हविर्द्रव्यों द्वारा, स्तोमेभिः = स्तोत्रों द्वारा, रुद्रम् = रुद्र को, अव दिषीय = शान्त करूँ, ऋदूदरः = उदार, सरल हृदयवाला, सुहवः = आसानी से प्रार्थनाओं को सुननेवाला, मा = मत, नः = हम लोगों को, अस्यै = उस, बभ्रुः = भूरे रंगवाला, सुशिप्रः = सुन्दर ओष्ठवाला, रीरधत् = शिकार बनावे, मनायै = क्रोध का ।

अन्वय—यः हवीमभिः हविर्भिः हवते ( तम् ) रुद्रं स्तोमेभिः अव दिषीय । ऋदूदरः सुहवः बभ्रुः सुशिप्रः नः अस्यै मनायै मा रीरधत् ।

हि० अ०—( उस ) रुद्र को स्तुतियों से शान्त करूँ, जो आह्वानों तथा यज्ञों द्वारा पूजा जाता है ।- उदार, आसानी से ( प्रार्थनाओं को ) सुननेवाला, भूरे वर्णवाला, सुन्दर ओष्ठवाला ( रुद्र ) हमको ( अपने विख्यात ) क्रोध का शिकार न बनावे ।

*Trans.*—With songs of praise I may pacify Rudra, who is worshipped with invocations and oblations. Let not the gracious, easy to invoke, brown-coloured, fair-lipped ( Rudra ) subject us to that malevolent disposition.

*Notes*—हवीमभिः—Instr. plu of the stem हवीमन् from √*hū* 'to call'. हवते—√*hū* 'to call', Ātm. pres. 3rd. sing.; not unaccented because followed by यः (यद्वृत्तपरं छन्दसि—Pāṇ. VIII.1.56). दिषीय—√*dā* 'to divide', Ātm. 's'-aorist, opt. 1st. sing. ऋदूदरः—Bahuvrihi compd. accented on the second member. Yāska followed by Sāyaṇa renders it by ऋदु-उदरः or मृदु-उदरः soft-bellied. Griffith takes it to mean 'gracious' and Macdonell as 'compassionate'. सुहवः—Bahuvrihi compd. accented on the second member; 'swift hearing' ( Griffith ). easy to invoke' (Macdonell) 'reverently invoked' (Wilson).

रीरधत्—√*radh* 'to make subject', red.-aorist, injun. 3rd. sing. अस्यै ''मनायै—Here अस्यै is not unaccented, because it is used with its substantive मनायै ( Vide VSB. p. 28 ).

उन्मा ममन्द वृषभो मरुत्वा-
न्त्वक्षीयसा वयसा नाधमानम् ।
घृणीव च्छायामरपा अशीया
विवासेयं रुद्रस्य सुम्नम् ॥ ६ ॥

उत् । मा । ममन्द । वृषभः । मरुत्वान् । त्वक्षीयसा । वयसा । नाधमानम् ॥ घृणिऽइव । छायाम् । अरपाः । अशीय । आ । विवासेयम् । रुद्रस्य । सुम्नम् ॥ ६ ॥

सा० भा०—वृषभः कामानां वर्षिता मरुत्वान् मरुद्भिः पुत्रैर्युक्तो रुद्रः नाधमानं याचमानं मा मां त्वक्षीयसा दीप्तेन वयसा अन्नेन उत् ममन्द उत्कर्षेण तर्पयतु । अपि चाहं घृणीव छायां यथा सूर्यकिरणसंतप्तः छायां प्रविशति एवं रुद्रस्य सुम्नं सुखम् अरपाः अपापः सन् अशीय व्याप्नुयाम् । तदर्थं तं रुद्रम् आ विवासेयं परिचरेयम् । विवासतिः परिचरणकर्मा ॥

शब्दा०—मा = मुझको, उत् ममन्द = आनन्दित करे, वृषभः = शक्तिशाली (रुद्र), मरुत्वान् = मरुतों के साथ, त्वक्षीयसा = तेजस्वी, वयसा = शक्ति से, नाधमानम् = प्रार्थना करनेवाले को, घृणीव = सूर्य-किरणों से संतप्त व्यक्ति की तरह, छायाम् = छाया को, अरपाः = पापरहित होकर, अशीय = प्राप्त करूँ, आ विवासेयम् = सेवा करूँ, रुद्रस्य = रुद्र के, सुम्नम् = सुख को।

अन्वय—वृषभः मरुत्वान् त्वक्षीयसा वयसा नाधमानं मा उत् ममन्द । ( अहम् ) अरपाः घृणीव छायाम् रुद्रस्य सुम्नम् अशीय । ( तदर्थं तं रुद्रम् ) आ विवासेयम् ।

हि० अ०—शक्तिशाली ( रुद्र ) मरुतों के साथ मुझ स्तुति करनेवाले को अपनी तेजस्वी शक्ति से आनन्दित करे । मैं ( रुद्र की ) सेवा करूँ, (ताकि) पापरहित होकर रुद्र के सुख को उसी प्रकार प्राप्त करूँ जिस प्रकार सूर्य-किरणों से संतप्त ( व्यक्ति ) छाया में ( सुख पाता है ) ।

***Trans.***—May the mighty one, accompanied with the Maruts, gladden me, his worshipper, with shining vitality. I, free from sin; propitiate (so that) I may attain the bliss of Rudra as a (man) distressed by heat attains (relief) in shade.

***Notes***—ममन्द—√ *mand* 'to exhilerate', Atm. perf. 3rd. sing. नाधमानम्—√ *nādh* 'to seek aid,' with the suffix शानच् ; acc. sing. अरपाः—Bahuvrihi compd. accented on the second member, because the first member is नञ् (नञ्सुभ्याम्—Pāṇ. VI.2.172). अशीय—√ *aṁś* 'to attain', Atm. root-aorist; opt. 1st. sing. विवासेयम्—√ *van* 'to win' desid opt. 1st. sing.

क्व१स्य ते रुद्र मृळयाकु-
हस्तो यो अस्ति भेषजो जलाषः ।
अपभर्ता रपसो दैव्यस्या-
भी नु मा वृषभ चक्षमीथाः ॥ ७ ॥

क्वं । स्यः । ते । रुद्र । मृळयाकुः । हस्तः । यः । अस्ति । भेषजः । जलाषः ॥ अपऽभर्ता । रपसः । दैव्यस्य । अभि । नु । मा । वृषभ । चक्षमीथाः ॥ ७ ॥

सा० भा०—हे रुद्र ते तव मृळयाकुः सुखयिता स्यः सः हस्तः क्व कुत्र वर्तते । यः हस्तः भेषजः भैषज्यकृत् जलाषः सर्वेषां सुखकरः अस्ति भवति । स हस्तो विद्यते एव । तेन हस्तेन मां रक्षेति भावः । अपि च हे वृषभ कामानां वर्षितः दैव्यस्य देवकृतस्य रपसः पापस्य अपभर्ता अपहर्ता विनाशयिता भूत्वा कृतापराधं मा मां नु क्षिप्रम् अभि चक्षमीथाः अभिक्षमस्व । 'क्षमूष् सहने' । लङि छान्दसः शपः श्लुः । 'बहुलं छन्दसि' इतीडागमः ॥

शब्दा०—क्व = कहां, स्यः = वह, ते = तुम्हारा, रुद्र = हे रुद्र, मृळयाकुः = सुखदायी, हस्तः = हाथ, यः = जो, अस्ति = है, भेषजः = स्वास्थ्य

देनेवाला, जलाषः = शीतलता पहुँचानेवाला, अपभर्ता = दूर करनेवाले, रपसः = पाप को, दैव्यस्य = देवताओं द्वारा भेजा हुआ, नु = अभी, मा = मेरे ऊपर, वृषभ = हे शक्तिशाली, अभि चक्षमीथाः = दया करो।

अन्वय—( हे ) रुद्र, ते स्यः मृळयाकुः हस्तः यः भेषजः जलाषः अस्ति, क्व ? ( हे ) वृषभ, दैव्यस्य रपसः अपभर्ता ( त्वं ), मा नु अभि चक्षमीथाः।

हि० अ०—हे रुद्र, वह तुम्हारा सुखदायी हाथ, जो सबको स्वास्थ्य एवं शीतलता ( आराम ) पहुँचानेवाला है, कहाँ है ? हे शक्तिशाली, देवताओं द्वारा प्रेषित पाप को ( भी ) दूर करनेवाले ( जो तुम हो ) मेरे ऊपर दया करो।

*Trans.*—Where is that thy gracious hand, O Rudra, which is curing and cooling ( i.e. giving comforts to all ). ( As thou art ) the dispeller of sin coming from gods, quickly have compassion upon me, O mighty.

*Notes*—क्व १ स्यः—Jātya Svarita followed by Udātta undergoes kampa The former is on short syllable ; hence it is shown by the numerical sign १ ( Vide VSB. p. 19 ). भेषजः जलाषः—Both are adjs. qualifying हस्तः . अपभर्ता—अप + √*bhṛ* 'to bear' with the suffix तृच् ; suffix being चित् the accent is on the final syllable. अमी—Final vowel is metrically lengthened. चक्षमीथाः—√ *kṣam* 'to endure', perf. opt. 2nd. sing.

प्र बभ्रवे वृषभाय श्वितीचे
महो महीं सुष्टुतिमीरयामि।
नमस्या कल्मलीकिनं नमोभि-
र्गृणीमसि त्वेषं रुद्रस्य नाम ॥ ८ ॥

प्र । बभ्रवे । वृषभाय । श्वितीचे । महः । महीम् । सुऽस्तुतिम् । ईरयामि ॥ नमस्य । कल्मलीकिनम् । नमःऽभिः । गृणीमसि । त्वेषम् । रुद्रस्य । नाम ॥ ८ ॥

सा० भा०—बभ्रवे विश्वस्य भर्त्रे बभ्रुवर्णाय वा वृषभाय कामानां वर्षित्रे तद्वत्प्रसह्यकारिणे वा श्वितीचे श्वैत्यमञ्चते। 'श्विता वर्णे'। औणादिक इन्प्रत्ययः। श्वितिमञ्चतीत्यञ्चतेः 'ऋत्विक्०' इत्यादिना क्विन्। चतुर्थ्येकवचने 'अचः' इत्यकार-लोपे 'चौ' इति दीर्घत्वम्। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। एवंगुणविशिष्टाय रुद्राय महो महीं महतोऽपि महतीं सुष्टुतिं शोभनस्तुतिं प्र ईरयामि प्रकर्षेणोच्चा-रयामि। हे स्तोतः कल्मलीकिनम्। ज्वलतो नामधेयमेतत् ( निरु० १. १७ )। ज्वलन्तम्। कलयति अपगमयति मलमिति कल्मलीकं तेजः। तद्वन्तं रुद्रं नमोभिः नमस्कारैः हविर्भिर्वा नमस्य पूजय। वयं च रुद्रस्य महादेवस्य त्वेषं दीप्तं नाम गृणीमसि गृणीमः संकीर्तयामः। 'गॄ शब्दे'। क्रैयादिकः। इदन्तो मसिः। 'प्वादीनां ह्रस्वः'॥

शब्दा०—बभ्रवे = भूरे वर्णवाले, वृषभाय = शक्तिशाली के लिये, श्वितीचे = सफेद आकृतिवाले, महः = बड़े से ( भी ), महीम् = बड़ी, सर्वश्रेष्ठ, सुष्टुतिम् = सुन्दर स्तुति को, प्र ईरयामि = प्रकृष्ट रूप से अर्पित करता हूँ, भेजता हूँ, नमस्य = नमस्कार करो, कल्मलीकिनम् = कलुष को नष्ट करने वाले, नमोभिः = स्तुतियों द्वारा, गृणीमसि = गान करते हैं, त्वेषम् = दीप्तिमान, रुद्रस्य = रुद्र के, नाम = नाम का।

अन्वय—बभ्रवे वृषभाय श्वितीचे महः महीं सुऽस्तुतिं प्र ईरयामि। कल्म-लीकिनं नमोभिः नमस्य। ( वयं ) रुद्रस्य त्वेषं नाम गृणीमसि।

हि० अ०—भूरे वर्णवाले, शक्तिशाली, सफेद आकृतिवाले ( रुद्र ) को मैं अपनी सर्वश्रेष्ठ सुन्दर स्तुति प्रकृष्ट रूप से अर्पित करता हूँ। कलुष को नष्ट करनेवाले ( रुद्र ) को स्तुतियों द्वारा नमस्कार करो। हमलोग रुद्र के दीप्तिमान् नाम का गान करते हैं।

***Trans.***—I utter forth the mightiest laudation to the mighty, brown-coloured, the white-complexioned ( Rudra ). Adore the brilliant ( i.e. consumer of darkness ) with salutations. We glorify the shining name of Rudra.

***Notes***—श्वितीचे—Dative, sing. of श्वित्यञ्च् from √*śvit* 'be bright' + इन् + √*añc* 'to go' + क्विप्. ईरयामि—√*īr* 'to set in motion,' caus. pres. 1st. sing. नमस्या—√*nam* 'to bend', impv. 2nd. sing. Final syllable is metrically lengthened

Macdonell takes it as subju, 1st sing. नमस्या कल्मलीकिनं नमोभिः—Wilson following Sāyaṇa translates : 'adore the consumer ( of sin ) with prostrations' ; Macdonell renders : 'I will adore the radiant one with obeisances' ; Griffith explains by we serve the brilliant God with adorations'. गृणीमसि—√gṛ 'to sing.' pres. 1st. plu. ; accented because it begins the pāda त्वेषम्—'Illustrious' ( Yāska, Sāyaṇa ). 'terrible' ( Macdonell )

स्थिरेभिरङ्गैः पुरुरूप उग्रो
बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।
ईशानादस्य भुवनस्य भूरे-
र्न वा उ योषद्रुद्रादसुर्यम् ॥ ९ ॥

स्थिरेभिः । अङ्गैः । पुरुऽरूपः । उग्रः । बभ्रुः । शुक्रेभिः । पिपिशे । हिरण्यैः ॥ ईशानात् । अस्य । भुवनस्य । भूरेः । न । वै । ऊँ इति । योषत् । रुद्रात् । असुर्यम् ॥ ९ ॥

सा० भा०—स्थिरेभिः स्थिरैः दृढैः अङ्गैः अवयवैर्युक्तः पुरुरूपः अष्टमूर्त्यात्मकैर्बहुभी रूपैरुपेतः उग्रः उद्गूर्णस्तेजस्वी बभ्रुः भर्ता बभ्रुवर्णो वा रुद्रः शुक्रेभिः दीप्तैः हिरण्यैः हिरण्मयैर्हितरमणीयैर्वालंकारैः पिपिशे दीप्यते । 'पिश अवयवे' । कर्मणि लिट् । ईशानात् ईश्वरात् अस्य भुवनस्य भूतजातस्य भूरेः भर्तुः रुद्रात् असुर्यम् । 'असु क्षेपणे' । असेरुरन् । असुरः क्षेप्ता । 'तत्र साधुः' । असुर्यं बलं न वा उ योषत् नैव पृथक् भवति । यौतेर्लेटयडागमः । 'सिब्बहुलं लेटि' इति सिप् ॥

शब्दा०—स्थिरेभिः = दृढ, अङ्गैः = अङ्गों से युक्त, पुरुरूपः = अनेक रूपवाले, उग्रः = भयानक, बभ्रुः = भूरे रंगवाले, शुक्रेभिः = चमकते हुए, पिपिशे = अलंकृत किया है, हिरण्यैः = स्वर्णाभूषणों से, ईशानात् = शासक से, अस्य = इस, भुवनस्य = लोक के, भूरेः = सबके मालिक, न = नहीं, वै = पूर्ववर्ती शब्द पर जोर देनेवाला एक निपात, योषत् = अलग होती है, असुर्यम् = प्राणदातृ शक्ति ।

अन्वय—पुरुरूपः उग्रः बभ्रुः स्थिरेभिः अङ्गैः शुक्रेभिः हिरण्यैः पिपिशे। अस्य भुवनस्य ईशानात् भूरेः रुद्रात् असुर्यं न वै उ योषत्।

हि॰ अ॰—दृढ़ अङ्गों से युक्त, अनेक रूपवाले, भयानक, भूरे रंगवाले (रुद्र) ने चमकते हुये स्वर्णाभूषणों से अपने को अलंकृत किया है। इस लोक के शासक, सबके मालिक रुद्र से प्राणदातृ शक्ति कभी अलग नहीं होती।

*Trans.*—Furnished with firm limbs, having many forms, terrible, brown-coloured (Rudra) has adorned himself with illustrious golden ornaments. The life-giving force never departs from Rudra, the supreme ruler and the lord of this world.

*Notes.*—पुरुरूपः—Bahuvrīhi compd. accented on the second member, because the first member is dissyllabic adjective ending in 'उ'. In the ṚV. it invariably happens when the first member is बहु or पुरु. (आद्युदात्तं द्व्यच्छन्दसि—Pāṇ. VI.2.119) पिपिशे—√ *piś* 'to adorn,' Ātm. perf. 3rd. sing ईशानात्—Abl. sing. of pres. participial stem ईशान from √ īś 'to be master' with the suffix शानच्. उ—In the pada-text उ is lengthened and nasalized. योषत्—√ *yu* 'to separate,' 's'-aorist. 3rd. sing.

अर्हन्बिभर्षि सायकानि धन्वा-

र्हन्निष्कं यजतं विश्वरूपम्।

अर्हन्निदं दयसे विश्वमभ्वं

न वा ओजीयो रुद्र त्वदस्ति ॥१०॥

अर्हन्। बिभर्षि। सायकानि। धन्व। अर्हन्। निष्कम्। यजतम्। विश्वऽरूपम्॥ अर्हन्। इदम्। दयसे। विश्वम्। अभ्वम्। न। वै। ओजीयः। रुद्र। त्वत्। अस्ति॥ १०॥

सा॰ भा॰—हे रुद्र त्वम् अर्हन् अर्हो योग्य एव सन् सायकानि शरान् धन्व धनुश्च बिभर्षि धारयसि। तथा अर्हन् एव यजतं यजनीयं पूजनीयं विश्वरूपं

बहुविधरूपयुक्तं निष्कं हारं बिभर्षि । तथा अर्हन् एव इदं विश्वं सर्वम् अभ्वम् । महन्नामैतत् । अतिविस्तृतं जगत् दयसे रक्षसि । 'देङ् रक्षणे'। हे रुद्र त्वत् त्वत्तोऽन्यत् किंचित् ओजीयः ओजस्वितरं बलवत्तरं न वै अस्ति न खलु विद्यते । अतस्त्वमेव उक्तव्यापारेषु योज्य इत्यर्थः । ओजःशब्दात् मत्वर्थीयो विनिः । ततः आतिशायनिकः इष्ठन । 'विन्मतोर्लुक्' । 'टेः' इति टिलोपः ॥

शब्दार्थ—अर्हन् = योग्य होते हुये, विभर्षि = धारण करते हो, सायकानि = बाणों को, धन्व=धनुष को, अर्हन् = योग्य होते हुए, निष्कम् = हार, यजतम् = पूजनीय. विश्वरूपम् = विभिन्न रूपों की, अर्हन् = योग्य होते हुये, इदम् = इसको, दयसे = रक्षा करते हो, विश्वम् = सम्पूर्ण, अभ्वम् = विस्तृत सृष्टि की, न = नहीं, वै = पूर्ववर्ती शब्द पर जोर देनेवाला एक निपात, ओजीयः = अधिक शक्तिशाली, रुद्र = हे रुद्र देवता, त्वत् = तुमसे अलग, अस्ति = है ।

अन्वय—( हे रुद्र, ) अर्हन् ( त्वं ) सायकानि धन्व बिभर्षि; अर्हन् ( त्वं ) यजतं विश्वरूपं निष्कं ( बिभर्षि ); अर्हन् ( त्वं ) इदं विश्वम् अभ्वं दयसे; ( हे ) रुद्र त्वद् ओजीयः न वै अस्ति ।

हि० अ०—( हे रुद्र, ) योग्य होते हुये ( तुम ) बाण तथा धनुष धारण करते हो; योग्य होते हुये ( तुम ) पूजनीय तथा विभिन्न रूपों की माला ( धारण करते हो ) । योग्य होते हुये ( तुम ) सम्पूर्ण सृष्टि की रक्षा करते हो; तुमसे बढकर शक्तिशाली, हे रुद्र, कोई नहीं है ।

*Trans.*—Worthy thou bearest arrows and bow; worthy thou (bearest) adorable and omniformed necklace Worthy thou protectest the whole world : none is more powerful than thou, O Rudra.

*Notes*—अर्हन्—Nom. sing of अर्हत् from √*arh* 'to deserrve' + शतृ; accented on the first syllable. बिभर्षि—√*bhṛ* 'to bear,' pres. 2nd, sing. विश्वरूपम्—Bahuvrīhi compd. accented on the first member. The word विश्व generally accents the first syllable, but when it occurs as the first member of a compd. it accents the final syllable ( बहुव्रीहौ विश्वं संज्ञायाम्—Pāṇ. VI. 2. 106. ) दयसे—√*da* 'to divide,' Ātm. pres. 2nd. sing. Sāyaṇa derives दयसे from √देङ् 'to protect'. In the

line 'स्थिरा चिदन्ना दयते विजम्भैः' ( Ṛv. IV. 7.10 ) he derives दयते from √दो 'to divide' इदं दयसे विश्वमभ्वं—Wilson following Sāyana translates 'thou preservest all this vast universe'; Griffith renders :- 'thou cuttest here each fiend to pieces'. Macdonell explains by 'thou wieldest all this force'. ओजीयः—Comparative degree of ओजः. It is formed from √*ubj* 'to force + असुन् + ईयसुन्.

स्तुहि श्रुतं गर्तसदं युवानं
मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानो-
ऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥११॥

स्तुहि । श्रुतम् । गर्तऽसदम् । युवानम् । मृगम् । न । भीमम् । उपऽहत्नुम् । उग्रम् ॥ मृळ । जरित्रे । रुद्र । स्तवानः । अन्यम् । ते । अस्मत् । नि । वपन्तु । सेनाः ॥११॥

सा० भा०—हे स्तोतः श्रुतं विश्रुतं प्रख्यातं रुद्रं स्तुहि । कीदृशम् गर्तसदं गर्तो रथः । तत्र सीदन्तं युवानं नित्यतरुणं मृगं न भीमं मृगं सिंहमिव भयंकरम् । उपहत्नुम् उपहन्तारं शत्रूणाम् उग्रं उद्गूर्णं हे रुद्र त्वं स्तवानः अस्माभिः स्तूयमानः सन् जरित्रे स्तोत्रे मह्यं मृळ सुखय । ते त्वदीयाः सेनाः अस्मत् अन्यम् अस्मद्व्यतिरिक्तं पुरुषं नि वपन्तु निघ्नन्तु ।

शब्दा०—स्तुहि = स्तुति करो, श्रुतम् = विख्यात, गर्तसदम् = रथ पर बैठे हुये, युवानम् = युवक की, मृगम् = जंगली पशु की, न = तरह, भीमम् = भयानक, उपहत्नुम् = शत्रु को मारनेवाले, उग्रम् = भयानक, मृळ = दया करो, जरित्रे = स्तुति करने वाले के लिये, रुद्र = हे रुद्र, स्तवानः = स्तूयमान होकर, अन्यम् = दूसरे को, ते = तुम्हारे, अस्मत् = हमसे भिन्न को, नि वपन्तु = नष्ट करें; सेनाः = शस्त्र ।

अन्वय—श्रुतं गर्तसदं युवानं मृगं न भीमं उपहत्नुम् उग्रं ( रुद्रं ) स्तुहि । ( हे ) रुद्र, स्तवानः ( त्वम् ) जरित्रे मृळ । ते सेनाः अस्मद् अन्यं नि वपन्तु ।

हि० अ०—विख्यात, रथ पर बैठे हुये, युवक, जंगली पशु की तरह भयंकर, (शत्रु को) मारनेवाले, भयानक रुद्र की स्तुति करो। हे रुद्र, स्तूयमान होकर स्तुतिगायक के लिये दया करो। तुम्हारे शस्त्र हमसे अन्य (शत्रु) का विनाश करें।

*Trans.*—Praise the well-known, sitting on the chariot, the young, the fierce like a wild beast, the slayer (of the enemies), the terrible (Rudra). O Rudra, being praised, be merciful to the singer. Let thy weapons smite down another than us.

*Notes*—स्तुहि—√*stu* 'to praise', impv. 2nd sing.; accented because it begins the pāda. गर्तसदम्—Tatpuruṣa compd. accented on the second member. The first member is locative in sense and the second member is a verbal noun. मृळ—√*mṛḍ* 'to be gracious,' pres. impv. 2nd. sing.; accented because it begins the pāda. स्तवानः—√*stu* 'to praise' with the suffix शानच्; passive in sense. वपन्तु—√*vap* 'to strew,' impv. 3rd. plu.

कुमारश्चित्पितरं वन्दमानं
प्रति नानाम रुद्रोपयन्तम्।
भूरेर्दातारं सत्पतिं गृणीषे
स्तुतस्त्वं भेषजा रास्यस्मे ॥१२॥

कुमारः। चित्। पितरम्। वन्दमानम्। प्रति। ननाम। रुद्र। उपऽयन्तम्॥ भूरेः। दातारम्। सत्ऽपतिम्। गृणीषे। स्तुतः। त्वम्। भेषजा। रासि। अस्मे इति ॥१२॥

सा० भा०—वन्दमानम् आयुष्मान्भव सौम्य इति स्तुवन्तं पितरं कुमारश्चित् यथा कुमारः। चिदित्येतदुपमार्थे। हे रुद्र उपयन्तम् अस्मत्समीपे गच्छन्तं त्वां प्रति ननाम प्रतिनतोऽस्मि। अपि च भूरेः बहुनो धनस्य दातारं सत्पतिं सतां पालयितारम्। 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम्। हे

रुद्र एवंभूतं त्वां गृणीषे स्तौमि। मिपः 'तिङां तिङो भवन्ति' इति सेआदेशः। स्तुतः च त्वम् अस्मे अस्मभ्यं भेषजा भेषजानि रासि देहि।

शब्दा०—कुमारः = पुत्र, चित् = उपमा अर्थ का वाचक एक निपात, पितरम् = पिता को, वन्दमानम् = आशीर्वचन बोलने वाले, प्रति = की ओर, ननाम = प्रणाम करता हूँ, रुद्र = हे रुद्र, उपयन्तम् = अपने पास आनेवाले तुमको, भूरेः = प्रचुर, दातारम् = देनेवाले, सत्पतिम् = सत्यस्वामी की, गृणीषे = गाता हूँ, स्तुत = स्तूयमान होकर, त्वम् = तुम, भेषजा = औषधियाँ, रासि = प्रदान करते हो, अस्मे = हम लोगों के लिये।

अन्वय—( हे ) रुद्र, वन्दमानं पितरं कुमारश्चित् उपयन्तं ( त्वां ) प्रति ननाम। भूरेः दातारं सत्पतिं ( त्वां ) गृणीषे। स्तुतः त्वम् अस्मे भेषजा रासि।

हि० अ०—जिस प्रकार एक पुत्र आशीर्वचन बोलनेवाले पिता को ( प्रणाम करता है ), उसी प्रकार हे रुद्र, मैं अपने पास आनेवाले तुमको प्रणाम करता हूं। मैं प्रचुरता में देनेवाले सत्यस्वामी ( तुम्हारी ) स्तुति गाता हूँ। ( उन गुणों से युक्त ) तुम स्तूयमान होकर हमको औषधियाँ प्रदान करते हो।

*Trans.*—As a son before ( his ) sire, bestowing a blessing, O Rudra, we bow to thee, coming ( towards us ). I glorify ( thee ) the profound bestower and true lord; thou ( as such ) being praised do grant us medicines.

*Notes.*—नानाम— √*nam* 'to bend,' perf. 1st sing. The reduplicative syllable is often lengthened in perf. stems. Macdonell takes it as perf. 3rd sing. He translates 'कुमारश्चित्—उपयन्तम्' as : 'A son bows towards his father who approaches him, O Rudra.' सत्पतिम्—Tatpuruṣa compd. accented on the first member (पत्यावैश्वर्ये—Pāṇ—VI.2.18). गृणीषे —An irregular form of √*gṛ* to sing. Ātm, pres. 1st. sing. ; here the congugational suffix से is in the place of मिप्. स्तुतः—√*stu* 'to praise,' + क्त. रासि—√*rā* to give, 2nd. sing ; Sāyaṇa and Griffith translate it in imperative sense, while Macdonell in pres. indicative sense. अस्मे—For अस्मभ्यम् ; final ए is Pragṛhya; hence, इति in the pada-text.

या वो भेषजा मरुतः शुचीनि
या शंतमा वृषणो या मयोभु ।
यानि मनुरवृणीता पिता न-
स्ता शं च योश्च रुद्रस्य वश्मि ॥१३॥

या । वः । भेषजा । मरुतः । शुचीनि । या । शम्ऽतमा । वृषणः । या । मयःऽभु ॥ यानि । मनुः । अवृणीत । पिता । नः । ता । शम् । च । योः । च । रुद्रस्य । वश्मि ॥ १३ ॥

सा० भा०—हे मरुतः रुद्रपुत्राः वः युष्माकं या यानि भेषजा भेषजान्यस्मदारोग्यहेतुभूतान्यौषधानि शुचीनि शुद्धानि निर्मलानि सन्ति । हे वृषणः कामानां वर्षितारो मरुतः या यानि च युष्मदीयानि भेषजानि शंतमा अतिशयेन सुखकराणि । या यानि च भेषजानि मयोभु मयोभूनि मयसः सुखस्य भावयितृणि नः अस्मत्पिता मनुः यानि भेषजानि युष्मदीयानि अवृणीत वृतवान् ता तानि भेषजानि रुद्रस्य महादेवस्य संबन्धि शं च योश्च यच्छमनीयानां रोगाणामुपशमनं यावनीयानां भयानां यद्यावनमस्मत्तः पृथक्करणं तदुभयं च वश्मि कामये ॥ 'वश कान्तौ' । आदादिकः ।

शब्दा०—या = जो, वः = तुम्हारी, भेषजा = औषधियों, मरुतः = हे मरुद्गण, शुचीनि = पवित्र, या = जो, शंतमा = अत्यधिक कल्याणकारी, वृषणः = हे शक्तिशालियो, या = जो, मयोभु = हितकारी, यानि = जिनको, मनुः = मनु ने, अवृणीत = चुना था, पिता = पिता, नः = हम लोगों के, ता = उन औषधियों की, शम् = आनन्द, च = और, योः = कल्याण, च = और, रुद्रस्य = रुद्र की, वश्मि = इच्छा करता हूँ ।

अन्वय—( हे ) वृषणः मरुतः, वः भेषजा, या शुचीनि, या शंतमा या मयोभु, यानि नः पिता मनुः अवृणीत ता रुद्रस्य शं च योः च वश्मि ।

हि० अ०—हे मरुद्गण, तुम्हारी औषधियां जो पवित्र हैं, जो अत्यधिक सुख देनेवाली हैं, हे शक्तिशाली, जो हितकारी हैं, जिनको हमारे पूर्वज मनु ने चुना था, उन ( औषधियों ) की तथा रुद्र की ( औषधियों ) की, जो आनन्द तथा कल्याण प्रदान करने वाली हैं, इच्छा करता हूं ।

*Trans.*—O Maruts, your medicines that are pure, that are the most pleasant, O powerful, that are beneficent, that our forefather Manu chose ; these and those of Rudra, that are pleasure-giving ( by cure ) and blessing ( by defending from danger ), I crave.

*Notes*—शंतमा—The superlative degree of शम् (pleasant). अवृणीता—√ *vṛ* to choose,. Ātm. impf. 3rd. sing Final syllable is metrically lengthened. वश्मि—√ *vaś* 'to desire,' pres. 1st. sing.

परिं णो हेती रुद्रस्यं वृज्याः
परिं त्वेषस्यं दुर्मतिर्मही गात् ।
अवं स्थिरा मघवंद्भ्यस्तनुष्व
मीढ्वंस्तोकाय तनंयाय मृळ ॥१४॥

परिं । नः । हेतिः । रुद्रस्यं । वृज्याः । परिं । त्वेषस्यं । दुःऽमतिः । मही । गात् ॥ अवं । स्थिरा । मघवंत्ऽभ्यः । तनुष्व । मीढ्वः । तोकायं । तनंयाय । मृळ ॥ १४ ॥

सा० भा०—रुद्रस्य महादेवस्य हेतिः आयुधं नः अस्मान् परि वृज्याः परिवर्जयतु । तथा त्वेषस्य दीप्तस्य रुद्रस्य मही महती दुर्मतिः दुःखकारिणी बुद्धिश्च परि गात् अस्मान् वर्जयित्वा अन्यत्र गच्छतु । 'अपपरी वर्जने' (पा० सू० १. ४. ८८ ) । हे मीढ्वः सेचनसमर्थ रुद्र स्थिरा स्थिराणि त्वदीयानि धनूंषि मघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः अव तनुष्व अवततज्यानि कुरु । तथा तोकाय अस्मत्पुत्राय तनयाय तत्पुत्राय च मृळ सुखं कुरु ॥

शब्दा०—नः = हम लोगों को, हेतिः = शस्त्र, रुद्रस्य = रुद्र का, परि वृज्याः = दूर रखे, त्वेषस्य = तेजस्वी रुद्र का, दुर्मतिः = क्रोध, मही = भयानक, परि गात् = दूर जावे, स्थिरा = दृढ़, मघवद्भ्यः = उदार दाताओं के लिये, अव तनुष्व = ढीला करो, मीढ्वः = हे दयालु, तोकाय = पुत्रों पर, तनयाय = पौत्रों पर, मृळ = दया करो ।

अन्वय—रुद्रस्य हेतिः नः परि वृज्याः। त्वेषस्य मही दुर्मतिः परि गात्। (हे) मीढ्वः, स्थिरा मघवद्भ्यः अव तनुष्व (तथा) तोकाय तनयाय (च) मृळ।

हि० अ०—रुद्र का शस्त्र हमको अलग रखे; तेजस्वी (रुद्र) का भयानक क्रोध हमसे दूर रहे। (हमारे) उदार दाताओं के लिये (अपने) दृढ़ (धनुषों) को ढीला करो; हे दयालु (रुद्र), (हमारे) पुत्र पौत्रादिकों पर दया करो।

*Trans.*—May the missile of Rudra avoid us. May the great ill-disposition (i.e. wrath) of the terrible one avoid us; loosen (thy) firm (bows) for our liberal patrons; O bounteous, be gracious to our sons and grandsons.

*Notes*—वृज्याः—√*vṛj* 'to twist,' root-aorist, prec. 3rd. sing. गात्—√*gā* 'to go', root-aorist, subju. 3rd. sing. तनुष्व—√*tan* 'to stretch' Ātm. impv. 2nd. sing. मीढ्वः—Voc. sing. of unreduplicated perf. participal stem मीढ्वस् from √mih 'to shed water' with the suffix क्वसु. मृळ—√*mṛḍ* 'to be gracious', impv. 2nd. sing.

एवा बभ्रो वृषभ चेकितान
यथा देव न हृणीषे न हंसि।
हवनश्रुन्नो रुद्रेह बोधि
बृहद्वदेम विदथे सुवीराः ॥१५॥

एव। बभ्रो इति। वृषभ। चेकितान। यथा। देव। न। हृणीषे। न। हंसि॥ हवनऽश्रुत्। नः। रुद्र। इह। बोधि। बृहत्। वदेम। विदथे। सुऽवीराः॥ १५॥

सा० भा०—हे बभ्रो जगतो भर्तर्बभ्रुवर्ण वा वृषभ कामानां वर्षितः चेकितान सर्वं जानन् हे देव द्योतमान रुद्र यथा येन प्रकारेण न हृणीषे न क्रुध्यसि न च हंसि। 'हृणीङ् लज्जायाम्'। अयं क्रुध्यतिकर्मा च। एवं हवनश्रुत् अस्मदीयमाह्वानं शृण्वन् नः अस्मान् हे रुद्र इह अस्मिन् देशे बोधि बुध्यस्व।

विदथे यज्ञे गृहे वा सुवीराः शोभनपुत्राः सन्तः बृहत् प्रौढं त्वदीयं स्तोत्रं वदेम उच्चारयाम ॥

शब्दा०—एव = इस प्रकार, बभ्रो = हे भूरे रंगवाले, वृषभ = हे शक्तिशाली, चेकितान = हे सर्वज्ञ, यथा = जिस प्रकार, देव = हे देव, न = नहीं, हृणीषे = क्रोध करो, न = नहीं, हंसि = मार सको, हवनश्रुत् = स्तुतियों को सुननेवाले, नः = हमारी, रुद्र = हे रुद्र, इह = यहाँ, बोधि = होवो, बृहत् = जोर से, वदेम = बोलें, विदथे = यज्ञमण्डप में, सुवीराः = पुत्र-पौत्रादिकों से युक्त।

अन्वय—हे बभ्रो, वृषभ, चेकितान, देव, यथा एव (त्वम्) न हृणीषे न हंसि; (हे) रुद्र इह (त्वं) नः हवनश्रुत् बोधि। (वयं) सुवीराः विदथे बृहद् वदेम।

हि० अ०—हे भूरे रंगवाले, शक्तिशाली, सर्वज्ञ, देव, (ऐसे तुम) हमारी स्तुतियों को सुननेवाले होवो, जिससे हे रुद्र, तुम (मुझपर) क्रोध न कर सको (तथा) मार न सको। वीर (पुत्र-पौत्रादिकों) से युक्त हम यज्ञमण्डप में जोरों से (तुम्हारा) स्तुति-गान करें।

*Trans.*—O tawny-coloured, powerful, omniscient, God, (thou as such) be listening to our invocations here, O Rudra, so that thou may not be angry, nor do (thou) slay us. May we accompanied with heroes speak aloud in the assembly.

*Notes.*—बभ्रो—Final ओ of the vocative is Pragṛhya; hence, इति in the pada-text. चेकितान—Voc. of inte. pres participial stem चेकितान from √*cit* 'to know' + शानच्. हृणीषे—√*hṛ* 'to be angry' Ātm. pres 2nd. sing, ; not unaccented because preceded by यथा (यावद्यथाभ्याम्—Pāṇ. VIII. 1. 36). हंसि—√*han* 'to kill' pres. 2nd. sing. ; not unaccented because syntactically connected with यथा. हवनश्रुत्—Tatpuruṣa compd. the final member of which is a verbal noun. बोधि—√*bhū* 'to be' root-aorist impv. 2nd. sing. वदेम—√*vad* 'to speak' pres. opt. 1st. plu.

# AGNI

'यस्त्वामग्ने' इति षडृचं द्वितीयं सूक्तम्। वामदेव ऋषिः। त्रैष्टुभं छन्दः। अग्निर्देवता। 'यस्त्वाम्' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः॥

यस्त्वामग्न इनधते यतस्रुक्
त्रिस्ते अन्नं कृणवत्सस्मिन्नहन्।
स सु द्युम्नैरभ्यस्तु प्रसक्ष-
त्तव क्रत्वा जातवेदश्चिकित्वान्॥ १॥

यः। त्वाम्। अग्ने। इनधते। यतऽस्रुक्। त्रिः। ते। अन्नम्। कृणवत्। सस्मिन्। अहन्॥ सः। सु। द्युम्नैः। अभि। अस्तु। प्रऽसक्षत्। तव। क्रत्वा। जातऽवेदः। चिकित्वान्॥ १॥

सा० भा०—हे अग्ने यतस्रुक् स्रुचा संबद्धः यः यजमानः त्वाम् इनधते दीप्तियुक्तं कुर्यात् यः सस्मिन्नहन् सर्वस्मिन्नहनि ते तुभ्यं त्रिः त्रिवारं सवनत्रये अन्नं हविर्लक्षणमन्नं कृणवत् कुर्यात्। हे जातवेदः जातानां वेदितरग्ने तव तोषकेण क्रत्वा इन्धनादिहेतुना कर्मणा प्रसक्षत् प्रसहमानं त्वदीयं तेजः चिकित्वान् जानन् सः यजमानः द्युम्नैः धनैर्यशोभिर्वा सु अत्यन्तम् अभ्यस्तु शत्रून् अभिभवतु॥

शब्दा०—यः = जो, त्वाम् = तुमको, अग्ने = हे अग्नि, इनधते = प्रज्ज्वलित करे, यतस्रुक् = नियमित स्रुवा वाला, त्रिः = तीन बार, ते = तुमको, अन्नम् = हवि, कृणवत् = प्रदान करे, सस्मिन् = सभी, अहन् = दिन, सः = वह, सु = अच्छी प्रकार से, द्युम्नैः = धनों से, अभ्यस्तु = अभिभूत करे, प्रसक्षत् = जीतने वाले तेज को, तव = तुम्हारे, क्रत्वा = शक्ति से, जातवेदः = हे जातवेदस् अग्नि, चिकित्वान् = बुद्धिमान्।

अन्वय—( हे ) अग्ने, यतस्रुक् यः त्वाम् इनधते, ( यः ) तस्मिन् अहन् ते त्रिः अन्नं कृणवत्, ( हे ) जातवेदः, तव क्रत्वा प्रसक्षत् चिकित्वान् सः द्युम्नैः सु अभि अस्तु।

हि० अ०—हे अग्नि, नियमित स्रुवावाला जो ( कोई ) तुमको प्रज्वलित करे; दिन में तीन बार तुमको हवि प्रदान करे; सबको जीतनेवाले ( तुम्हारे तेज ) को जानने वाला वह ( व्यक्ति ) हे जातवेदस्, धनों से तथा तुम्हारे पराक्रम से ( शत्रुओं को ) अच्छी प्रकार से अभिभूत करे।

*Trans.*—Whoever, O Agni, with uplifted ladle kindles and offers food to thee thrice everyday, may he, the knower of ( thy ) all-prevailing ( lustre ), surpass with riches, O Jātavedas, with thy power.

*Notes*—इनधते—√*indh* 'to kindle'; Ātm. pres. subju. 3rd. sing.; accented because preceded by यः. यतस्रुक्—यत is past part. from √*yam* 'to stretch out' with the suffix क्त. Bahuvrihi compd. accented on the first member. कृणवत्—√*kr* 'to make,' pres. subju. 3rd. sing.; accented because syntactically connected with यः. अभ्यस्तु—√*as* with अभि 'to surpass', pres. impv. 3rd. sing. In क्षैप्र संधि the combination of preceding Udātta and following Anudātta results into Svarita, which is called क्षैप्र स्वरित. प्रसक्षत्—√*sah* 'to prevail', 'sa'-aorist part. क्रत्वा—'By the act' ( Wilson ). 'through mental power' ( Griffith ); instr sing. of क्रतु from √*kr* 'to make' with the suffix कतु. चिकित्वान्—√*cit* 'to perceive' with the suffix क्वसु; nom. sing.

इध्मं यस्ते जुभरच्छश्रमाणो
महो अग्ने अनीकमा सपर्यन्।
स इधानः प्रति दोषामुषासं
पुष्यन्रयिं सचते घ्नन्नमित्रान् ॥ २ ॥

इ॒ध्मम् । यः । ते॒ । ज॒भर॑त् । शु॒श्र॒मा॒णः । म॒हः । अ॒ग्ने॒ । अनी॑ऽकम् । आ । स॒प॒र्यन् ॥ सः । इ॒धा॒नः । प्रति॑ । दो॒षाम् । उ॒षस॑म् । पुष्य॑न् । र॒यिम् । स॒च॒ते॒ । घ्नन् । अ॒मित्रा॑न् ॥ २ ॥

सा० भा०—हे अग्ने यः यजमानः ते तुभ्यम् इध्मं होमसाधनं समिद्व्रातं जभरत् आहरेत् । 'हृञ् हरणे' लिङर्थे लेट् । तस्य तिपः 'इतश्च लोपः' इति इकारलोपः । 'बहुलं छन्दसि' इति शपः श्लुः । द्विर्वचनादिकार्यम् । 'लेटोऽडाटौ' इत्यडागमः । 'हृग्रहोर्भः' इति भत्वम् । शश्रमाणः इध्माद्याहरणे श्राम्यन् महः महतः तव आ अनीकम् । आकारश्चार्थे तेजश्च सपर्यन् परिचरन् यो यजमानः दोषां प्रति रात्रिं लक्षीकृत्य उषसं प्रति उषःकालं च लक्षीकृत्य । कालद्वयेऽपीत्यर्थः । इधानः इन्धानस्त्वां दीप्तियुक्तं करोति पुष्यन् प्रजाभिः पशुभिश्च पुष्टः सन् सः यजमानः अमित्रान् शत्रून् घ्नन् हिंसन् रयिं धन सचते सेवते । सर्वदा पश्वादि-धनसमृद्धो भवतीत्यर्थः ।

शब्दा०—इध्मम् = इन्धन, यः = जो, ते = तुम्हारे लिये, ज[illegible]त् = लाता है, शश्रमाणः = परिश्रम करता हुआ, महः = शक्तिशाली, अग्ने = हे अग्नि, अनीकम् = तेजपुञ्ज का, आ = और, सपर्यन् = सत्कार करता हुआ सः = वह, इधानः = प्रज्ज्वलित करनेवाला, प्रति = प्रत्येक, दोषाम् = रात्रि, उ[illegible]म् = सुबह, पुष्यन् = समृद्ध होता हुआ, रयिम् = धन, सचते = पाता है, घ्नन् = मारता हुआ, अमित्रान् = शत्रुओं को ।

अन्वय—( हे ) अग्ने, शश्रमाणः आ महः (तव) अनीकम् सपर्यन् यः ते इध्मं जभरत् प्रति दोषाम् उषसं इधानः सः पुष्यन् (-सन्) अमित्रान् घ्नन् रयिं सचते ।

हि० अ०—हे अग्नि, परिश्रम करता हुआ, शक्तिशाली ( तुम्हारे ) तेज का सत्कार करता हुआ, जो तुम्हारे लिये इन्धन लाता है, वह प्रत्येक रात्रि तथा सुबह ( तुमको ) प्रज्ज्वलित करता हुआ, ( स्वयं ) समृद्ध होता हुआ तथा शत्रुओं को मारता हुआ धन को प्राप्त करता है ।

*Trans*—Whoever toiling, brings fuel to thee, O Agni, honouring (thy) mighty splendour, kindling (thee) at every night and morning, flourishing, and killing the enemies, he accompanies the riches.

*Notes.*—जुभरत्—√*bhṛ* 'to bear', pref. subju. 3rd sing.; accented because preceded by यः. शुश्रमाणः—√*śram* 'to toil' + कानच्. सपर्यन्—From denom. verbal root √*sapary* 'to honour' + शतृ. इधानः—√*indh* 'to kindle', aorist part. पुष्यन्—√*puṣ* 'to flourish', + शतृ. सचते—√*sac* 'to accompany', Atm. pres. 3rd. sing. घ्नन्—√*han* 'to kill' + शतृ.

अग्निरीशे बृहतः क्षत्रियस्या-
ग्निर्वाजस्य परमस्य रायः ।
दधाति रत्नं विधते यविष्ठो
व्यानुषङ्मर्त्याय स्वधावान् ॥ ३ ॥

अग्निः । ईशे । बृहतः । क्षत्रियस्य । अग्निः । वाजस्य । परमस्य । रायः ॥ दधाति । रत्नम् । विधते । यविष्ठः । वि । आनुषक् । मर्त्याय । स्वधाऽवान् ॥ ३ ॥

सा० भा०—उखासंभरणीयेष्टौ अग्नेः क्षत्रभृतोऽनुवाक्या । तथा च सूत्रितम्—'अग्निरीशे बृहतः क्षत्रियस्यार्चामि ते सुमतिं घोष्यर्वाक्' ( अश्व० श्रौ० ४.१ ) इति ॥

अग्निः बृहतः महतः क्षत्रियस्य बलस्य ईशे ईश्वरः भवति । वर्तमानेऽर्थे लिट् । किंच अग्निः परमस्य उत्कृष्टस्य वाजस्य अन्नस्य रायः पश्वादेर्धनस्य चेशे । यविष्ठः युवतमः स्वधावान् अन्नवान् तेजस्वी वाग्निः विधते परिचरते । 'विधतिः परिचरणकर्मा' इति यास्कः । मर्त्याय मनुष्याय यजमानाय रत्नं रमणीयं धनम् आनुषक् अनुषक्तं वि दधाति करोति ॥

शब्दा०—अग्निः = अग्नि देव, ईशे = शासन करता है, बृहतः = बड़े, क्षत्रियस्य = राजशक्ति का, अग्निः = अग्नि देव, वाजस्य = अन्न का, परमस्य = श्रेष्ठ, रायः = पश्वादि धन का, दधाति = धारण करता है, रत्नम् = कीमती धन, विधते = प्रार्थना करने वाले के लिये, यविष्ठः = श्रेष्ठ युवक, आनुषक् = निर्बाध रूप से, मर्त्याय = मनुष्य के लिये, स्वधावान् = आत्मशक्तिवाला ।

अन्वय—अग्निः बृहतः क्षत्रियस्य ईशे; अग्निः परमस्य वाजस्य रायः (ईशे)। यविष्ठः स्वधावान् अग्निः विधते मर्त्याय रत्नम् आनुषक् वि दधाति।

हि० अ०—अग्नि महान् राजशक्ति का शासक है; अग्नि अन्न का तथा श्रेष्ठ (पश्वादि) धन का (शासक है)। श्रेष्ठ युवक, आत्मशक्तिवाला (अग्नि) प्रार्थना करनेवाले मनुष्य के लिये निर्बाध रूप से कीमती धन प्रदान करता है।

*Trans*—Agni is the master of great sovereignty. Agni (is the master) of food and of excellent riches. The most youthful (Agni), the self-powerful god, bestows the precious (riches) upon the worshipful mortal uninterruptedly.

*Notes*—ईशे—√*īś* 'to be master', Ātm. pres. 3rd. sing. दधाति—√*dhā* 'to put' pres. 3rd. sing.; accented because beginning of the pāda. विधते—Dative sing. of विधत् from √*vidh* 'to worship' + शतृ. यविष्ठः-√*yu* 'to unite' or 'to separate' + इष्ठन्. The suffix being नित् it accents the first syllable (ञ्नित्यादिर्नित्यम्—Pāṇ VI. 1. 197). स्वधावान्—'Abounding in sustenance' (Wilson), 'self-reliant God' (Griffith).

यच्चिद्धि ते पुरुषत्रा यविष्ठा-
चित्तिभिश्चकृमा कच्चिदागः।
कृधी ष्व१स्माँ अदितेरनागा-
न्व्येनांसि शिश्रथो विष्वगग्ने॥ ४॥

यत्। चित्। हि। ते। पुरुषऽत्रा। यविष्ठ। अचित्तिऽभिः। चकृम। कत्। चित्। आगः॥ कृधि। सु। अस्मान्। अदितेः। अनागान्। वि। एनांसि। शिश्रथः। विष्वक्। अग्ने॥ ४॥

सा० भा०—हे यविष्ठ युवतम अग्ने, यच्चिद्धि यद्यपि खलु ते त्वदीयेषु पुरुषत्रा परिचारकेषु पुरुषेषु अचित्तिभिः अज्ञानैः कच्चिदागः किंचिदपि पापं

वयं चकृम तथापि हे अग्ने अस्मान् अदितेः भूमेः अनागान् अनागसः पापरहितान् सु अत्यन्तं कृधि कुरु । हे अग्ने विष्वक् सर्वतो विद्यमानानि एनांसि अस्माभिः कृतानि पापानि वि शिश्रथः विश्लथय शिथिलीकुरु ।

शब्दा०—यत् = यदि, चित् = भी, हि = निश्चित रूप से, ते = तुम्हारे, पुरुषत्रा = मनुष्यों के बीच होने के नाते, यविष्ठ = हे श्रेष्ठ युवक, अचित्तिभिः = अज्ञानवश, चकृम = किया है, कत् = कोई, चित् = भी, आगः = पाप, कृधि = करो, सु = अच्छी प्रकार से, अस्मान् = हम लोगों को, अदितेः = अदिति के सामने, अनागान् = पापरहित, एनांसि = पापों को, वि शिश्रथः = नष्ट करो, शिथिल करो विष्वक = चारों तरफ से, अग्ने = हे अग्नि ।

अन्वय—( हे ) यविष्ठ, यत् चित् हि ते पुरुषत्रा ( वयं ) अचित्तिभिः कत् चित् आगः चकृम, ( हे ) अग्ने, अस्मान् अदितेः अनागान् सु कृधि; विष्वक् एनांसि वि शिश्रथः ।

हिं० अ०—हे श्रेष्ठ युवक ( अग्नि ), तुम्हारे ( सेवक ) मनुष्यों में होने के नाते अज्ञानवश यदि हमने कोई पाप किया है ( तो भी ) हमको अदिति के सामने पूर्णतया पापरहित करो; हे अग्नि, चारों तरफ से, पापों को नष्ट करो ।

***Trans.***—O the most youthful ( Agni ), if ( we ) among thy human beings, have ever committed any sin unknowingly, ( even then ) make us fully sinless before Aditi; entirely remove our sins from all sides, O Agni.

***Notes***—पुरुषत्रा—The termination त्रा with the words देव, मनुष्य, पुरुष, पुरु-and मर्त्य very frequently expresses the accusative and locative sense (देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्—Pāṇ. V. 4. 56 ) and it is always accented. In the pada-text it is separated by avagraha from the stem. चकृमा—√ *kṛ* 'to make, perf. 1st, plu.; accented because preceded by यत्, चित् and हि. Final syllable is metrically lengthened. कृधि—√ *kṛ* to make,' root-aorist, impv. 2nd. sing.; accented because beginning of the pāda. शिश्रथः—√ *śrath* 'to slacken' red. aorist, 2nd. sing.

महश्चिदग्न एनसो अभीकं
ऊर्वाद्देवानामुत मर्त्यानाम् ।
मा ते सखायः सदमिद्रिषाम
यच्छा तोकाय तनयाय शं योः ॥ ५ ॥

महः । चित् । अग्ने । एनसः । अभीके । ऊर्वात् । देवानाम् ।
उत । मर्त्यानाम् ॥ मा । ते । सखायः । सदम् । इत् । रिषाम ।
यच्छ । तोकाय । तनयाय । शम् । योः ॥ ५ ॥

सा० भा०—हे अग्ने देवानाम् इन्द्रादीनाम् उत अपि च मर्त्यानां मनुष्याणाम् अभीके अन्तिके । अभीक इत्यन्तिकनामैतत् । अस्माभिर्यत्पापं कृतं महश्चित् महतोऽपि ऊर्वात् विस्तृतादस्मात् एनसः पापात् ते त्वदीयाः सखायः मित्रभूताः स्तोतारो वयं सदमित् सर्वदैव मा रिषाम मा हिंसिता भूम । हे अग्ने त्वं तोकाय पुत्राय तनयाय पौत्राय शं पापरूपोपद्रवाणां शान्ति योः सुकृतोत्पादितं सुखं च यच्छ देहि ।

शब्दा०—महः = बड़े; चित् = भी, अग्ने = हे अग्नि, एनसः = पाप से, अभीके = सम्मुख, ऊर्वात् = विस्तृत, देवानाम् = देवताओं के, उत = और, मर्त्यानाम् = मनुष्यों के, मा = मत, ते = तुम्हारे सखायः = मित्र, सदम् इत् = कभी भी, रिषाम = कष्ट सहें, यच्छ = प्रदान करो, तोकाय = पुत्रों को, तनयाय = पौत्रों को, शम् = शान्ति, योः = प्रसन्नता ।

अन्वय—( हे ) अग्ने, देवानाम् उत मर्त्यानाम् अभीके महः चित् ऊर्वात् एनसः ते सखायः ( वयं ) सदम् इत् मा रिषामः तोकाय तनयाय शं योः ( च ) यच्छ ।

हि० अ०—हे अग्नि, बड़े तथा विस्तृत पापों से भी, जिनको (हमलोगों ने) देवताओं तथा मनुष्यों के सम्मुख किया है, (हम) तुम्हारे मित्र कभी भी कष्ट न सहें; ( प्रत्युत) (हमार) पुत्र तथा पौत्रों को शान्ति एवं प्रसन्नता प्रदान करो ।

*Trans.*—Even from the great and extensive sins ( committed ) in the presence of the gods and men, O Agni, let not ( we ) thy friends ever suffer harm ; grant for ( our ) sons and grandsons, tranquility and happiness

*Notes*—ऊर्वात्—Ablative sing. of ऊर्व from उरु ( √vṛ 'to cover ). रिषाम—√riṣ 'to be hurt', 'a'-aorist, subju. 1st. plu. यच्छ—√yam 'to stretch out', pres. impv. 2nd. sing. ; not unaccented because it begins the pāda.

यथा ह त्यद्वसवो गौर्यं चि-
त्पदि षितामसुञ्चता यजत्राः ।
एवो ष्व१स्मन्मुञ्चता व्यंहः
प्र तार्यग्ने प्रतरं न आयुः ॥ ६ ॥

यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । सिताम् । अमुञ्चत । यजत्राः । एवो इति । सु । अस्मत् । मुञ्चत । वि । अंहः । प्र । तारि । अग्ने । प्रऽतरम् । नः । आयुः ॥ ६ ॥

सा० भा०—यजत्राः यजनीयाः पूजार्हा हे वसवः निवासयितारः अग्नयः यूयं यथा ह यथैव त्यत् त्यां तां पदि पादे सितां बद्धां गौर्यं चित् गौरीं गामपि अमुञ्चत त्यक्तवन्तो भूयास्त । एवो एवमेव अस्मत् अस्मत्तः अंहः पापं सु अत्यन्तं वि मुञ्चत विमुक्तं कुरुत । बहुवचनं पूजार्थम् । हे अग्ने त्वया प्रेतरं प्रवृद्धं न अस्मदीयम् आयुः प्र तारि प्रवृद्धं क्रियताम् ॥

शब्दा०—यथा = जिस प्रकार, त्यत् = उस, वसवः = हे वसुओ, गौर्यम् = गाय को, चित् = भी, पदि = पैर में सिताम् = बंधी हुई को, अमुञ्चत = मुक्त किया, यजत्राः = हे पूजनीयो, एवो = उसी प्रकार, सु = पूर्ण रूप से, अस्मत् = हमसे, विमुञ्चत = मुक्त करो, अंहः = पाप को, प्र तारि = लम्बी होवे, अग्ने = हे अग्नि, प्रतरम् = लम्बी, नः = हमारी, आयुः = उम्र ।

अन्वय—( हे ) यजत्राः वसवः, यथा ह त्यत् पदि सिताम् गौर्यं चित् अमुञ्चत, एवो अस्मत् अंहः सु वि मुञ्चत ।

हि० अ०—हे वसुओ, हे पूजनीय ( अग्नि ), जिस प्रकार पैर में बंधी गाय को ( तुमने ) मुक्त किया उसी प्रकार ( हमको ) हमारे पापों से पूर्णरूप से मुक्त करो; हे अग्नि, हमारी लम्बी आयु और लम्बी होवे ।

*Trans.*—O Vasus, O adorable ones, as you liberated the cow, bound by the foot, similarly, set us free entirely from sin ; O Agni, let our long life be extended.

*Notes.*—सिताम्—√ *sā* 'to bind' + क्त, fem. acc. sing. अमुञ्चत—√ *muc* 'to release' impf. 2nd. plu. ; accented because preceded by यथा. एवो—Final ओ is Pragṛhya ; hence followed by इति in the pada-text. मुञ्चत—√ *muc* 'to release', pres. impv. 2nd plu. तारि—√ *tṛ* 'to cross', passive aorist, injun. 3rd. sing.

No: 8 VI. 54

# PŪṢAN

'सं पूषन्' इति दशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं पौष्णं गायत्रम्। 'सं पूषन्' इष्टधनमन्विच्छता पुरुषेणैतज्जप्यम्। सूत्रितं च—'सं पूषन्विदुषेति नष्टमधिजिगमिषन्मूळ्हो वा' ( आश्व० गृ० ३. ७. ९ ) इति।

सं पूषन् विदुषा नय यो अञ्जसानुशासति।
य एवेदमिति ब्रवत् ॥ १ ॥

सम्। पूषन्। विदुषा। नय। यः। अञ्जसा। अनुऽशासति॥
यः। एव। इदम्। इति। ब्रवत् ॥ १ ॥

सा० भा०—हे पूषन् पोषक देव विदुषा जानता तेन जनेन संनय अस्मान् संगमय यः विद्वान् अञ्जसा ऋजुमार्गेण अनुशासति अनुशास्ति नष्टद्रव्यप्राप्त्युपायमुपदिशति। यः च एव एवम् इदं नष्टं भवदीयं धनम् इति ब्रवत् ब्रवीति। नष्टं धनं दर्शयतीत्यर्थः। तेन विदुषेत्यन्वयः॥

शब्दा०—पूषन् = हे पूषन्, विदुषा = जानकार व्यक्ति से, संनय = संयुक्त करो, मिलाओ, यः = जो, अञ्जसा = सीधे, अनुशासति = बतावे, यः = जो, एव = ही, इदम् = यह = इति = ऐसा, ब्रवत् = कहे।

अन्वय—( हे ) पूषन् ( तेन ) विदुषा संनय यः अञ्जसा अनुशासति, यः 'इदम् एव' इति ब्रवत्।

हि० अ०—हे पूषन्, ( हमे उस ) जानकर ( व्यक्ति ) के सम्पर्क में ले जावो जो सीधे मार्ग से ( नष्ट द्रव्यों की प्राप्ति का उपाय ) बतावे, तथा जो यह कहे कि 'यह यहाँ है'।

*Trans.*—O Pūṣan, associate ( us ) with a wise ( man ) who may instruct ( us ) in simple way. ( and ) who may speak, 'it is here'.

*Notes* —संनय—√*nī* with सम् 'to associate,' 'to conjoin, impv. 2nd. sing. अनुशासति—अनु + √*śās* 'to instruct,' pres. subju. 3rd. sing. ; not unaccented because preceded by यः. ब्रवत्—√*brū* to speak, pres. subju. 3rd. sing.; not unaccented because preceded by यः.

समु पूष्णा गमेमहि यो गृहाँ अभिशासति ।
इम एवेति च ब्रवत् ॥ २ ॥

सम् । ऊँ इति । पूष्णा । गमेमहि । यः । गृहान् । अभिऽशासति ॥
इमे । एव । इति । च । ब्रवत् ॥ २ ॥

सा० भा०—पूष्णा अनुगृहीता वयं सं गमेमहि तेन जनेन संगच्छेमहि यः जनः गृहान् येषु गृहेषु अस्मदीया नष्टाः पशवस्तिष्ठन्ति तान् गृहान् अभिशासति अभिशास्ति आभिमुख्येन बोधयति । यश्च इमे त्वदीया नष्टाः पशवः एव एवं तिष्ठन्ति इति च ब्रवत् ब्रूयात् ॥

शब्दा०—पूष्णा = पूषा के साथ, संगमेमहि = चलें, यः = जो, गृहान् = उन घरों को जहां पर चुराये गये पशु रखे गये हैं, अभिशासति = बतावे, इमे = ये, एव = यहीं, इति = ऐसा, ब्रवत् = कहे ।

अन्वय—( वयं ) पूष्णा सं गमेमहि, यः गृहान् अभिशासति, 'इमे एव' इति च ब्रवत् ।

हि० अ०—पूषा के साथ ( हम लोग ) चलें, जो ( खोये पशुओं के रखने की गुप्त ) जगह बतावे; तथा जो यह बतावे कि 'वे यहीं हैं'।

*Trans.*—May we go together with Pūṣan, who may instruct ( the way to ) places ( where lost things are kept hidden ); and who may speak, 'these are here'.

*Notes*—संगमेमहि—√*gam* with सम् to go together, 'a'-aorist, opt. 1st. plu. ब्रवत्—√*brū* 'to speak' pres. subju. 3rd. sing; accented because preceded by च ( चादिषु च—Pāṇ VIII.1.58. ).

पूष्णश्चक्रं न रिंष्यति न कोशोऽवं पद्यते ।
नो अस्य व्यथते पविः ॥ ३ ॥

पूष्णः । चक्रम् । न । रिष्यति । न । कोशः । अवं । पद्यते ॥
नो इतिं । अस्य । व्यथते । पविः ॥ ३ ॥

सा० भा०—पूष्णः पोषकस्य देवस्य चक्रम् आयुधं न रिष्यति न विनश्यति । अस्य चक्रस्य कोशः च न अवपद्यते न हीयते । अस्य पविः धारा च नो नैव व्यथते कुण्ठीभवति । तेन चक्रेण चोरान् हत्वा अस्मदीयं धनं प्रकाशयेति भावः ।

शब्दा०—पूष्णः = पूषा का, चक्रम् = आयुध, न = नहीं, रिष्यति = नष्ट होता, न = नहीं, कोशः = तरकस, अव पद्यते = खाली होता है, नो = नहीं, अस्य = उसका, व्यथते = कुण्ठित होती है, पविः = धार ।

अन्वय—पूष्णः चक्रं न रिष्यति, न कोशः अव पद्यते; नो अस्य पविः व्यथते ।

हि० अ०—पूषा का आयुध कभी नष्ट नहीं होता; (उसका) तरकस कभी खाली नहीं होता; उसकी धार कभी कुण्ठित नहीं होती ।

*Trans.*—The weapon of Pūṣan is never injured ; the quiver is never vacated ; its edge is never blunted.

*Notes*—चक्रम्—'Weapon' ( Sāyaṇa ), 'wheel of the chariot' ( Grffith, Macdonell ). रिष्यति—√ *riṣ* 'to be hurt' pres. 3rd. sing. कोशः—'Quiver' ( Sāyaṇa ), 'box, an interior part of the chariot' (Griffith). अवंपद्यते—√ *pad* with अव 'to go down'. Sāyaṇa takes it to mean 'is never vacated' (न हीयते). नो—(= न + उ ); उ, when combined with the final अ or आ ( of a particle ) into ओ, it is treated as Pragṛhya vowel ; hence, इति is added after it in the pada-text. However, in pada-text उ is not separated from न. अस्य—Unaccented because it occurs in the middle of the pāda without its substantive. व्यथते—√ *vyath* 'to waver,' Atm. pres. 3rd.' sing. Sāyaṇa takes it to mean 'is blunted' कुण्ठीभवति. पविः—'Edge of the weapon ( Sāyaṇa ) 'felly' ( Griffith, Macdonell ).

यो अ॑स्मै ह॒विषावि॑धन्न तं पू॒षापि॑ मृष्यते ।

प्र॒थ॒मो वि॑न्दते॒ वसु॑ ॥ ४ ॥

यः । अ॒स्मै॑ । ह॒विषा॑ । अवि॑धत् । न । तम् । पू॒षा । अपि॑ । मृ॒ष्य॒ते॒ ॥ प्र॒थ॒मः । वि॒न्द॒ते॒ । वसु॑ ॥ ४ ॥

सा० भा०—यः यजमानः अस्मै पूष्णे हविषा चरुपुरोडाशादिना अविधत् परिचरति तं यजमानं पूषा न अपि मृष्यते । अपिशब्द ईषदर्थे । ईषदपि न हिनस्ति । स च प्रथमः मुख्यः सन् वसु धनं विन्दते लभते ॥

शब्दा०—यः = जो, अस्मै = उसके लिये, हविषा = हवि से, अविधत् = पूजा करता है, न = नहीं, तम् = उसको, पूषा = पूषा देवता, अपि = जरा भी, मृष्यते = भूलता, प्रथमः = सर्वप्रथम, विन्दते = प्राप्त करता है, वसु = धन ।

अन्वयं—यः अस्मै (पूष्णे) हविः अविधत् तं पूषा अपि न मृष्यते । (सः) प्रथमः वसु विन्दते ।

हि० अ०—जो इसके लिये हवि से पूजा करता है, उसको पूषा जरा भी नहीं भूलता; (वह) सर्वप्रथम धन प्राप्त करता है ।

*Trans.*—Who worships him with oblation, Pūṣan does not least forget him; he attains the wealth first.

*Notes*—अविधत्—√ *vidh* 'to worship', impf. 3rd sing.; not unaccented because preceded by यः . अपि—Verbal preposition ; Sāyaṇa takes it in the sense of 'least' (अपि शब्द ईषदर्थे ). मृष्यते—√ *mṛṣ* 'to not heed, 'to do harm' (Sāyaṇa). pres. Ātm. 3rd. sing. विन्दते—√ *vid* to find, pres. Ātm. 3rd. sing.

पू॒षा गा अन्वे॑तु नः पू॒षा र॑क्ष॒त्वर्व॑तः ।

पू॒षा वाजं॑ सनोतु नः ॥ ५ ॥

पू॒षा । गाः । अनु॑ । ए॒तु॒ । नः॒ । पू॒षा । र॒क्ष॒तु॒ । अर्व॑तः ॥ पू॒षा । वाज॑म् । स॒नो॒तु॒ । नः॒ ॥५॥

सा० भा०—पूषा पोषको देवः नः अस्मदीयाः गाः अन्वेतु रक्षणार्थमनुगच्छतु। स च पूषा अर्वतः अश्वान् रक्षतु चोरेभ्यः। तथा वाजम् अन्नं च नः अस्मभ्यं पूषा सनोतु प्रयच्छतु ॥

शब्दा०—पूषा = पूषा देव, गाः = गायों के, अनु = पीछे, एतु = जावे, पूषा = पूषा देव, रक्षतु = रक्षा करे, अर्वतः = अश्वों को, पूषा = पूषा देव, वाजम् = धन, सनोतु = प्रदान करे, नः = हमारे लिये।

अन्वय—पूषा नः गाः अनु एतु। पूषा अर्वतः रक्षतु। पूषा नः वाजं सनोतु।

हि० अ०—पूषा हमारी पशुओं ( की रक्षा के लिये उन ) के पीछे जावे; पूषा घोड़ों की ( चोरों से ) रक्षा करे; पूषा हमारे लिये धन प्रदान करे।

*Trans.*—May Pūṣan go after our cattle ; may Pūṣan protect our horses ; may Pūṣan grant us food.

*Notes*— अन्वेतु—√*i* with अनु 'to go after, impv. 3rd. sing. रक्षतु—√*rakṣ* 'to protect,' impv. 3rd. sing. सनोतु—√*san* 'to gain,' impv. 3rd. sing.

पूषन्नतु प्र गा इ॑हि यज॑मानस्य सुन्व॒तः।
अ॒स्माकं॑ स्तुव॒तामु॒त ॥ ६ ॥

पूष॑न्। अनु॑। प्र। गाः। इ॒हि॒। यज॑मानस्य। सु॒न्व॒तः ॥
अ॒स्माक॑म्। स्तु॒वताम्। उ॒त ॥६॥

सा० भा०—हे पूषन् सुन्वतः सोमाभिषवं कुर्वतः यजमानस्य गाः पशून् अनु प्र इहि रक्षणार्थमनुगच्छ। उत अपि च स्तुवतां त्वद्विषयं स्तोत्रं कुर्वताम् अस्माकं गाश्चानुगच्छ ॥

शब्दा:—पूषन् = हे पूषन्, अनु = पीछे, गाः = गायों के, इहि = जाओ, यजमानस्य = यजमान की, सुन्वत. = सोम पीसनेवाले की, अस्माकम = हमारी, स्तुवताम् = स्तुति करनेवाले की, उत = और।

अन्वय—( हे ) पूषन्, सुन्वतः यजमानस्य उत स्तुवताम् अस्माकं गाः अनु प्र इहि।

हि॰ अ॰—हे पूषन्, सोम पीसनेवाले यजमान की गायों ( की रक्षा के लिये ) उनके पीछे जावो; और (तुम्हारी ) स्तुति करनेवाले हमलोगों की ( गायों के भी पीछे जावो ) ।

*Trans.*—O Pūṣan, go after the cows of sacrificer, who presses Soma, and of us who praise ( thee ).

*Notes*—अनुं इहि—√*i* with अनु 'to go after,' impv. 2nd. sing. सुन्वतः—Gen. sing of सुन्वत् from √*su* 'to press' with the suffix शतृ.

माकिर्नेशन्माकीं रिषन् माकीं सं शारि केवटे ।
अथारिष्टाभिरा गहि ॥ ७ ॥

माकिः । नेशत् । माकीम् । रिषत् । माकीम् । सम् । शारि । केवटे ॥ अथ । अरिष्टाभिः । आ । गहि ॥७॥

सा॰ भा॰—हे पूषन् अस्मदीयं गोधनं माकिर्नेशत् मा नश्यतु । माकिर्माकीम् इत्येतौ प्रतिषेधमात्रे वर्तेते । माकीं रिषत् । मा व्याघ्रादिभिर्हिंस्यताम् । माकीं मा च केवटे कूपे सं शारि संशीर्णं भूत् । कूपपातेनापि हिंसितं मा भवतु । अथ एवं सति अरिष्टाभिः अहिंसिताभिर्गोभिः सह आ गहि सायंकाले आगच्छ ॥

शब्दा॰—माकिः = कोई नहीं, नेशत् = नष्ट हो, भूले, माकीम् = किसी को भी नहीं, रिषत् = चोट लगे, माकीम् = कोई भी नहीं, संशारि = गिरकर नष्ट हो, केवटे = कूएं में, अथ = अतः, अरिष्टाभिः = बिना कष्ट पहुँचे गायों के साथ, आ गहि = आवो ।

अन्वय—माकिः नेशत् माकीं रिषत्, माकीं केवटे सं शारि । अथ ( हे पूषन् ) अरिष्टाभिः ( गोभिः ) आ गहि !

हि॰ अ॰—( गायों में से ) कोई न भूले, किसी को चोट न लगे; कोई कूएं में ( गिरकर ) न मर जाय । अतः तम बिना कष्ट पहुँचे ( गायों ) के साथ आवो ।

*Trans.*—Let none ( of our cows ) be lost ; let none be harmed ; let none be crushed in the well. Thus, come with uninjured ( cows ).

*Notes*—नेशत्—√ *naś* 'to be lost'. 'red'-aorist, injun. 3rd. sing. रिषत्—√ *riṣ* 'to be hurt'. 'a'-aorist, injun. 3rd. sing. सं शारि—√ *śṛ* 'to crush'. pass. aorist, 3rd. sing. आ गंहि—√*gam* with आ 'to come', root-aorist, impv. 2nd. sing.

शृण्वन्तं पूषणं वयमिर्यमनष्टवेदसम् ।
ईशानं राय ईमहे ॥ ८ ॥

शृण्वन्तम् । पूषणम् । वयम् । इर्यम् । अनष्टऽवेदसम् ॥ ईशानम् । रायः । ईमहे ॥ ८ ॥

सा० भा०—अस्मत्स्तोत्राणि शृण्वन्तम् इर्यं दारिद्र्यस्य प्रेरकम् अनष्टवेदसम् अविनष्टधनम् ईशानं सर्वस्येश्वरमेवंविधं पूषणं देवं वयं रायः धनानि ईमहे याचामहे ॥

शब्दा०—शृण्वन्तम् = सुनने वाले, पूषणम् = पूषा को, वयम् = हम, इर्यम् = दरिद्रता को दूर करनेवाले, अनष्टवेदसम् = कभी नष्ट न होने योग्य धनवाले, ईशानम् = मालिक, रायः = धन के, ईमहे = प्रार्थना करते हैं ।

अन्वय—वयं शृणवन्तम् इर्यम् अनष्टवेदसं रायः ईशानं पूषणम् ईमहे ।

हि० अ०—( प्रार्थना ) सुननेवाले, दरिद्रता को दूर करनेवाले, कभी नष्ट न होने योग्य धनवाले, धन के मालिक पूषा की हम प्रार्थना करते हैं ।

*Trans.*—We implore Pūṣan, the hearer (of our prayers), the impeller of poverty, the possessor of wealth, never to be lost, and the master of wealth

*Notes*—शृण्वन्तम्—√*śru* 'to hear', with the suffix शतृ. acc. sing. इर्यम्—'Impeller of poverty' ( Sāyaṇa ), 'strong' ( Griffith ), 'watchful' ( Peterson, Macdonell ). अनष्टवेदसम्—Him whose wealth is never lost ; Bahuvrīhi compd. with the natural accent on the first member. ईशानम्—√*īś* 'to be master', with the suffix शानच्, acc. sing. रायः—Gen. sing. of रै ; Sāyaṇa, however, takes it as acc. plu. According to him, it is an object of ईमहे. But it should be construed with ईशानम्. ईमहे—√*i* 'to go'. Ātm. pres. 1st. plu.

पूषन्तव॑ व्र॒ते व॒यं न रि॑ष्येम॒ कदा॑ च॒न
स्तो॒तार॑स्त इ॒ह स्म॑सि ॥ ९ ॥

पूष॑न् । तव॑ । व्र॒ते । व॒यम् । न । रि॒ष्ये॒म॒ । कदा॑ । च॒न ॥ स्तो॒तार॑ः । ते॒ । इ॒ह । स्म॒सि॒ ॥ ९ ॥

सा० भा०—हे पूषन् पोषक तव त्वदीये व्रते कर्मणि वर्तमानाः वयं कदाचन कदाचिदपि न रिष्येम हिंसिता न भवेम। तादृशाश्च वयम् इह अस्मिन् कर्मणि ते तव स्तोतारः स्मसि स्मः भवामः ॥

शब्दाः—पूषन् = हे पूषन्, तव = तुम्हारे, व्रते = कार्य में लगे, वयम् = हमलोग, न = नहीं, रिष्येम = कष्ट पावें, कदाचन = कभी भी, स्तोतारः = स्तुति करनेवाले; ते = तुम्हारे, इह = यहाँ, स्मसि = हैं।

अन्वय—( हे ) पूषन्, तव व्रते वयं कदाचन न रिष्येम; ( वयम् ) इह ते स्तोतारः स्मसि।

हि० अ०—हे पूषन्, तुम्हारे कार्य में ( लगे हमलोग ) कभी भी कष्ट न पावें। यहाँ हम लोग तुम्हारे स्तुति-गायक हैं।

*Trans.*—O Pūṣan, in thy service we never be injured. Here ( we ) are singers of thy praise.

*Notes*—रि॒ष्ये॒म॒—√*riṣ* 'to be hurt', opt. 1st. plu. स्म॒सि॒—√*as* 'to be', pres. 1st. plu. मसि-ending in place of मस् is more common in the ṚV. ( इदन्तो मसि—Pāṇ. VIII. 1. 46 ).

परि॑ पू॒षा प॒रस्ता॒द्धस्तं॑ दधातु॒ दक्षि॑णम् ।
पुन॑र्नो न॒ष्टमाज॑तु ॥ १० ॥

परि॑ । पू॒षा । प॒रस्ता॑त् । हस्त॑म् । द॒धा॒तु॒ । दक्षि॑णम् ॥ पुन॑ः । नः॒ । न॒ष्टम् । आ । अ॒ज॒तु॒ ॥ १० ॥

सा० भा०—पूषा पोषको देवः परस्तात् परस्मिन् देशे सुसंचारादन्यस्मिन् चोरव्याघ्रादिभिरुषिते देशे गच्छतो गोधनस्य निवारणाय स्वकीयं दक्षिणं हस्तं परि दधातु। परिधानं निवारकं करोतु। नः अस्मदीयं नष्टं च गोधनं पुनः आजतु आगच्छतु। आगमयतु ॥१०॥

शब्दा०—पूषा = पूषा, परस्तात् = दूर से, हस्तम् = हाथ, परि दधातु = चारों तरफ रखे, दक्षिणम् = दाहिना, पुनः = फिर, नः = हमारे पास, नष्टम् = चोरी गये पशु को, आ अजतु = भेजे।

हि० अ०—पूषा परस्तात् दक्षिणं हस्तं परि दधातु। नष्टं पुनः नः आ अजतु।

*Trans.*—Let Pūṣan put his right hand around (for our protection) from afar. Let him drive the lost (cattle) fo us again.

*Notes.*—परि दधातु—√*dhā* 'to put', impv. 3rd. sing. नष्टम्—√*naś* 'to be lost' with the suffix क्त. अजतु—√*aj* 'to drive', impv. 3rd sing.

# VARUNA

'धीरा त्वस्य' इत्यष्टर्चं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वरुणदेवत्यम् । तथा चानुक्रान्तम्—'धीराष्टौ वारुणं ह' इति । गतो विनियोगः ॥

धीरा त्वस्य महिना जनूंषि
वि यस्तस्तम्भ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं
द्विता नक्षत्रं पप्रथच्च भूम ॥ १ ॥

धीरा । तु । अस्य । महिना । जनूंषि । वि । यः । तस्तम्भं । रोदसी इति । चित् । उर्वी इति ॥ प्र । नाकम् । ऋष्वम् । नुनुदे । बृहन्तम् । द्विता । नक्षत्रम् । पप्रथत् । च । भूम ॥ १ ॥

सा० भा०—अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना तु क्षिप्रं धीरा धीराणि धैर्यवन्ति भवन्ति । यः वरुणः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यावपि वि तस्तम्भ विविधं स्तब्धे स्वकीये स्थाने स्थिते अकरोत् । यश्च बृहन्तं महान्तं नाकम् आदित्यं नक्षत्रं च ऋष्वं दर्शनीयं द्विता द्वैधं प्र नुनुदे प्रेरयति स्म । अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथेति द्विप्रकारः । भूम भूमिं च यः पप्रथत् अप्रथयत् विस्तारितवान् । तस्यास्य वरुणस्येत्यन्वयः ॥

शब्दा०—धीरा = स्थिर, तु = शीघ्र, वास्तव में, अस्य = इस (वरुण) के, महिना = महानता के कारण, जनूंषि = जन्म, यः = जिसने, वि तस्तम्भ = धारण किया है, रोदसी = आकाश तथा पृथिवी को, चित् = भी, उर्वी = विस्तृत, नाकम् = सूर्य को, ऋष्वम् = ऊँचे, प्र नुनुदे = प्रेरित किया है, बृहन्तम् = महान्, द्विता = दो प्रकार से, नक्षत्रम् = नक्षत्रों को, पप्रथत् = विस्तृत किया है, च = और, भूम = पृथिवी को ।

अन्वय—अस्य ( वरुणस्य ) जनूंषि महिना तु धारा, यः उर्वी रोदसी चित् वि तस्तम्भ, ( यः ) ऋष्वं बृहन्तं नाकं नक्षत्रं ( च ) द्विता प्र नुनुदे, ( यः ) भूम च पप्रथत् ।

हि० अ०—इस ( वरुण ) के जन्म ( इसकी ) महानता के कारण वास्तव में स्थिर हैं, जिसने विस्तृत आकाश तथा पृथिवी को भी धारण किया है, ( जिसने ) ऊँचे एवं महान् सूर्य और नक्षत्रों को दो प्रकार से प्रेरित किया है तथा पृथिवी को विस्तारित किया है ।

***Trans.***—His ( Varuṇa's ) births are, indeed, stabled in greatness ; who propped even the vast heaven and earth ; he urged the lofty and great sun and constellation to motion to ( their ) twofold ( task ) and spread the earth.

*Notes*—धीरा—'Stabled' ( Sāyaṇa ), 'permanent' ( Wilson ), 'wise' ( Griffith ); Grassmann derives it from √*dhī*, while Geldner from √*dhṛ* to hold. तु—Sāyaṇa renders it as 'क्षिप्रं', Griffith as 'verily', and Macdonell as 'indeed'. जनूंषि—'Births' (Sāyaṇa), 'creatures' ( Griffith ), Creation' ( Peterson), 'created beings especially gods and men' ( Parāñjpe ), 'generations' (Macdonell). तस्तम्भ—√*stambh* 'to prop', pref. 3rd. sing. ; not unaccented because preceded by यः . रोदसी—Final ई is pragṛhya ; hence, इति in the pada-text. नाकम्—According to Yāska नाकम् means sun as well as sky ( नाकः आदित्यो भवति नेता भासाम् । ज्योतिषां प्रणयः । अथ द्यौः, कम् इति सुखनाम । तत् प्रतिषिद्धं प्रतिषिध्येत । न वा अमुं लोकं जग्मुषे किंचनाकम् । न वा अमुं लोकं गतवते किंचन असुखम्—Nir. II. 14 ). Sāyaṇa takes it here to mean 'sun', Griffith and Peterson as 'sky'. ऋष्वम्—Lofty ( Nigh. III. 3.3 ). Sāyaṇa renders it as 'दर्शनीयं', Wilson as 'beautiful'; Griffith and Peterson follow Yāska's interpretation. प्र नुनुदे—√*nud* 'to push', pref. 3rd. sing. Maxmüller takes it to mean 'lighted on high'. बृहन्तम्—Pres. part. acc. sing. of बृहत् from √*bṛṁh* 'to make big'. द्विता—'By itself', 'all alone', 'on both sides i. e. westwards by day and

eastwards at night' (Geldner) 'apart' (Maxmüller), 'forsooth', 'verily' (Oldenberg). According to Roth, Grassmann and Bergaigne, it is an emphatic particle. पुप्रथत्— √*prath* 'to spread', pluperfect, subju. 3rd. sing.; not unaccented because it is regarded as beginning of a new sentence.

उत स्वया तन्वा३ सं वंदे त-
त्कदा न्व१न्तर्वरुणे भुवानि ।
किं मे हुव्यमहृणानो जुषेत
कुदा मृळीकं सुमना अभि ख्यम् ॥ २ ॥

उत । स्वया । तुन्वा । सम् । वुदे । तत् । कुदा । नु । अन्तः । वरुणे । भुवानि ॥ किम् । मे । हुव्यम् । अहृणानः । जुषेत । कुदा । मृळीकम् । सुऽमनाः । अभि । ख्यम् ॥ २ ॥

सा० भा०—वरुणं शीघ्रं दिदृक्षमाण ऋषिरनया वितर्कयति । उतेति विचिकित्सायाम् । उत किं स्वया तन्वा स्वीयेनात्मीयेन शरीरेण सं वदे सहवदनं करोमि । आहो स्वित् तत् तेन वरुणेन सह संवदे । कदा नु कदा खलु वरुणे देवे अन्तः भुवानि अन्तर्भूतो भवानि । वरुणस्य चित्ते संलग्नो भवानीत्यर्थः । अपि च मे मदीयं हव्यं स्तोत्रं हविर्वा अहृणानः अक्रुध्यन् वरुणः किं केन हेतुना जुषेत सेवेत । सुमनाः शोभनमनस्कः सन्नहं कदा कस्मिन् काले मृळीकं सुखयितारं वरुणम् अभि ख्यम् अभिपश्येयम् ॥

शब्दा०—उत = और, स्वया = अपने, तन्वा = शरीर से, संवदे = वार्तालाप करूंगा, तत् = उस देव के साथ, कदा = कब, नु = निश्चित रूप से, अन्तः = हृदय में, वरुणे = वरुण के, भुवानि = होऊंगा किम् = क्या, मे = मेरी, हव्यम् = प्रार्थना, अहृणानः = क्रोधरहित होकर, जुषेत = स्वीकार करेगा कदा = कब, मृळीकम् = दयालु (वरुण) को, सुमनाः = सुन्दर मनवाला होकर, अभि ख्यम् = देखूँगा ।

अन्वय—उत स्वया तन्वा तत् संवदे; कदा नु वरुणे अन्तः भुवानि ? अहृणानः किं मे हव्यं जुषेत ? सुमनाः (अहं) मृळीकं (वरुणं) कदा अभिख्यम् ?

हि० अ०—क्या मैं अपने शरीर से उस (वरुण देवता) के साथ वार्तालाप करूँगा, ? वरुण के हृदय में मैं कब होऊँगा ? क्या मेरी प्रार्थना को क्रोधरहित (होकर वह) स्वीकार करेगा ? सुन्दर मनवाला (होकर) मैं दयालु (वरुण) को कब देखूँगा ?

*Trans.*—Whether I with my own body converse together with that (Varuṇa)? When shall I be in the heart of Varuṇa? Would the unangered one accept my invocation? When shall I with good mind see the merciful (Varuṇa)?

*Notes*—उत—Sāyaṇa renders it by 'किम्'; Wilson takes it to mean 'when' and Peterson as 'and'. तन्वा३ सम्—For accent see note on क्वे३दानीम् (Ṛv. I. 35.7). संवदे—√*vad* with सम् 'to speak together', pres. 1st. sing. न्व१न्तः—For accent see note on व्य१थिनः (Ṛv.I.48.6). भुवानि—√*bhū* 'to be', 'root'-aorist, subju. 1st. sing अहृणानः—Pres. part from √*hr* 'to be angry' + शानच; नञ् compd. accented on the first member. जुषेत—√*juṣ* 'to enjoy', Ātm. opt. 3rd. sing अभिख्यम्—√*khyā* 'to see' 'a'-aorist, injun. 1st. sing

पृच्छे तदेनो वरुण दिदृ-
क्षूपो एमि चिकितुषो विपृच्छम् ।
समानमिन्मे कवयश्चिदाहु-
रयं ह तुभ्यं वरुणो हृणीते ॥ ३ ॥

पृच्छे । तत् । एनः । वरुण । दिदृक्षु । उपो इति । एमि । चिकितुषः । विऽपृच्छम् ॥ समानम् । इत् । मे । कवयः । चित् । आहुः । अयम् । ह । तुभ्यम् । वरुणः । हृणीते ॥ ३ ॥

सा० भा०—हे वरुण तदेनः पापं पृच्छे त्वां पृच्छामि । दिदृक्षु । छान्दसः सुलोपः । द्रष्टुमिच्छन्नहम् । येन पापेन हेतुना त्वदीयैः पाशैर्बद्धोऽस्मि पृष्टः संस्तत्

पापं कथय। अहं विपृच्छं विविधं प्रष्टुं चिकितुषः विदुषो जनान् उपो एमि उपागाम्। ते कवयश्चित् क्रान्तदर्शिनो जनाश्च मे मह्यं समानमित् समानमेवैकरूपमेव आहुः अकथयन्। यदाहुस्तदाह। हे स्तोतः तुभ्यम् अयं ह अयमेव वरुणः हृणीते क्रुध्यतीति। अतः क्रोधं परित्यज्यास्मान् पाशेभ्यो मोचय॥

शब्दार्थ—पृच्छे = पूछता हूँ, तत् = उस, एनः = पाप को, वरुण = हे वरुण, दिदृक्षु = देखने की इच्छा से, उपो = पास, एमि = जाता हूँ, चिकितुषः = विद्वानों के, विपृच्छम् = विविधरूप से पूछने के लिये, समानम् = एक जैसा, इत् = ही, मे = मुझको, कवयः = बुद्धिमानों ने, चित् = भी, आहुः = कहा, अयम् = यह, ह = निश्चित अर्थ का वाचक एक निपात, तुभ्यम् = तुम पर, वरुणः = वरुण देवता, हृणीते = क्रोध करता है।

अन्वय—(हे वरुण) दिदृक्षु (अहं) तद् एनः पृच्छे। (अहं) विपृच्छं चिकितुषः उपो एमि। कवयः चित् मे समानम् इत् आहुः 'अयं ह वरुणः तुभ्यं हृणीते'।

हि० अ०—हे वरुण, देखने की इच्छा से उस पाप को (मैं तुमसे) पूछता हूँ; विविध रूप से पूछने के लिये (मैं) विद्वानों के पास जाता हूँ। बुद्धिमानों ने एक ही (उत्तर) कहा—'यह वरुण ही तुम पर क्रोध करता है'।

*Trans.*—Desirous of seeing, O Varuṇa, I ask that sin (of mine); (I) have gone to wise ones to ask. 'The wise ones told me the same (answer), 'verily this Varuṇa is angry upon thee'.

*Notes*—पृच्छे—√*prach* 'to ask.' Ātm pres. 1st. sing. दिदृक्षु—√*dṛś* 'to see', desid. noun used as an adverb. Here visarga has been dropped. In classical Sanskrit it would be दिदृक्षुः. उपो—(= उप + उ); final ओ is Pragṛhya; see note on नो (Ṛv. VI. 54.3). एमि—√*i* 'to go' pres. 1st. sing. चिकितुषः—Acc. plu. of चिकित्वस् from √*cit* 'to know with the suffix क्वसु. In weak cases व becomes उ by samprasāraṇa. विपृच्छम्—Acc. infinitive in अम् from √*prach* 'to ask'. आहुः—√*ah* 'to say', perf. 3rd. plu. हृणीते—√*hṛ* 'to be angry', pres. Ātm. 3rd. sing.

केमाग॑ आस वरुण॒ ज्येष्ठं॒
यत्स्तो॒तारं॒ जिघां॑ससि॒ सखा॑यम् ।
प्र तन्मे॑ वोचो दूळभ स्वधा॒वो-
ऽव॑ त्वाने॒ना नम॑सा तु॒र इ॑याम् ॥ ४ ॥

किम् । आगः॑ । आ॒स॒ । व॒रु॒ण॒ । ज्येष्ठ॑म् । यत् । स्तो॒तार॑म् । जिघां॑ससि । सखा॑यम् ॥ प्र । तत् । मे॒ । वो॒चः॒ । दुः॒ऽद॒भ॒ । स्व॒धा॒ऽव॒ः । अव॑ । त्वा॒ । अ॒ने॒नाः । नम॑सा । तु॒रः । इ॒या॒म् ॥४॥

सा० भा०—हे वरुण ज्येष्ठम् अधिकं किमाग आस कोऽपराधो मया कृतो बभूव। यत् येन आगसा सखायं मित्रभूतं सन्तं स्तोतारं जिघांससि हन्तुमिच्छसि। हे दूळभ दुर्दभान्यैर्बाधितुमशक्य स्वधावः तेजस्विन् हे वरुण तत् आगः मे मह्यं प्र वोचः प्रब्रूहि। एवं सति तस्य प्रायश्चित्तं कृत्वा अनेनाः अपापः सन्नहं तुरः त्वरमाणः शीघ्रः नमसा नमस्कारेण हविषा वा त्वाम् अव इयाम् उपगच्छेयम् ॥

शब्दा०—किम् = क्या, कौन, आगः = पाप, आस = था, वरुण = हे वरुण, ज्येष्ठम् = बड़ा, यत् = जिसके कारण, स्तोतारम् = स्तुति करनेवाले को, जिघांससि = मारना चाहते हो, सखायम् = मित्र को, तत् = उसको, मे = मुझसे, प्र वोचः = कहो, दूळभ = हे कभी न सताये जानेवाले, स्वधावः = हे शक्तिशाली, त्वा = तुम्हारे पास, अनेनाः = पापरहित होकर, नमसा = प्रार्थना द्वारा, तुरः = शीघ्र, अव इयाम् = पहुँचूं।

अन्वय—( हे ) वरुण किं ज्येष्ठम् आगः आस यत् सखायं स्तोतारं जिघांससि। ( हे ) दूळभ, स्वधावः ( वरुण ) तत् मे प्र वोचः। अनेनाः तुरः नमसा त्वा अव इयाम्।

हिं० अ०—हे वरुण, कौन वह महान् पाप था, जिससे कि तुम (अपनी स्तुति करनेवाले मित्र को मारना चाहते हो; हे कभी न सताये जानेवाले, शक्तिशाली ( वरुण ), उसको मुझसे कहो, ( जिससे मैं ) पापरहित ( होकर ) शीघ्र ही प्रार्थना द्वारा तुम्हारे पास पहुँचूं।

*Trans.*—O Varuṇa, what was that, the most heinous sin that thou want to kill ( thy ) worshipper and a friend ;

tell me that, O unharmed (and) powerful one, (so that) freed from sin, with salutation may I reach thee quickly.

*Notes* —आस—√*as* to be', pref. 3rd. sing. जिघांससि—√*han* 'to kill', desid. 2nd. sing.; not unaccented because preceded by यत्. वोचः—√ *vac* 'to speak', 'red'-aorist, injun. 2nd. sing. दूळभ—(= दुः + √ दभ्); visarjanīya has disappeared before the voiced dental द् after cerebralizing the latter and lengthening the preceding vowel : दुः √दभ ⌞ दुज्दभ ∠ दूळभ (cf. दुर्लभ, दूलह). स्वधावः—Voc. sing of the stem स्वधावत् from स्वधा + वतुप्. 'Resplendant' (Sāyaṇa), 'lord' (Griffith). 'sovereign God' (Peterson) अनेनाः—Freed from sin; Bahuvrīhi compd. accented on the second member (नञ्सुभ्याम्—Pāṇ VI.2.172). इयाम्—√ *i* 'to go, opt. 1st. sing.

अव द्रुग्धानि पित्र्या सृजा नो-
ऽव या वयं चकृमा तनूभिः ।
अव राजन्पशुतृपं न तायुं
सृजा वत्सं न दाम्नो वसिष्ठम् ॥ ५ ॥

अव । द्रुग्धानि । पित्र्या । सृज । नः । अव । या । वयम् । चकृम । तनूभिः ॥ अव । राजन् । पशुऽतृपम् । न । तायुम् । सृज । वत्सम् । न । दाम्नः । वसिष्ठम् ॥ ५ ॥

सा० भा०—हे वरुण पित्र्या पितृतः प्राप्तानि नः अस्मदीयानि द्रुग्धानि द्रोहान् बन्धनहेतुभूतान् अव सृज विमुञ्च । अस्मत्तो विश्लेषय । वयं च या यानि द्रोहजातानि तनूभिः शरीरैः चकृम कृतवन्तः स्म तानि च अव सृज । हे राजमान वरुण पशुतृपं न तायु स्तैन्यप्रायश्चितं कृत्वावसाने घासादिभिः पशूनां तर्पयितारं स्तेनमिव दाम्नः रज्जोः वत्सं न वत्समिव च वसिष्ठं मा बन्धकात् पापात् अव सृज विमुञ्च ॥

शब्दा०—द्रुग्धानि = पापों से, पित्र्या = पिता से प्राप्त, अव सृज = मुक्त करो, नः = हमको, अव (अव सृज) = मुक्त करो, या = जो. वयम् =

हमने, चकृम = किया है, तनूभिः = शरीर से, राजन् = हे राजन्, पशुतृपम् = पशु को घासादि से तृप्त करनेवाले, न = जिस तरह, तायुम् = चोर को, अवसृज = मुक्त करो, वत्सम् = बछडे को, न = जिस तरह, दाम्नः = रस्सी से, वसिष्ठम् = वशिष्ठ को.

अन्वय—पित्र्या ( प्राप्तानि ) नः द्रुग्धानि अव सृज; या ( द्रुग्धानि ) वयं तनूभिः चकृम अव ( सृज )। ( हे ) राजन्, पशुतृपं तायुं न, दाम्नः वत्सं न वसिष्ठम् अव सृज।

हि० अ०—पिता द्वारा ( प्राप्त ) पापों से मुक्त करो; उन ( पापों ) से जिनको हमने स्वयं अपने शरीर से किय है, मुक्त करो। हे राजन्, जिस प्रकार पशु को ( प्रायश्चित्त के बाद घासादि से ) तृप्त करनेवाले चोर को तथा बछड़े को रस्सी से ( मुक्त किया जाता है, उसी प्रकार ) वसिष्ठ को ( पापों से ) मुक्त करो।

*Trans.*—Set us free from sins ( committed ) by our father, from those that we have committed with our bodies. Release Vasiṣṭha, O king, ( from the bond ) like a thief feeding cattle ( after remorse ), like a calf from the cord.

*Notes*—द्रुग्धानि—From √*druh* 'to hate' with the suffix क ; 'hatred that causes one to be bound' ( Sāyaṇa ), 'ill deeds' ( Wilson ), 'sins' ( Griffith ), 'unrighteous acts' ( Peterson ). अव सृजा—√*sṛj* with अव 'to set free', impv. 2nd. sing.; metrical lengthening of final vowel. चकृमा—√*kṛ* 'to make', pref. 1st. plu.; not unaccented because preceded by या ; metrical lengthening of final vowel. पशुतृपम्—'Nourishing the cattle after remorse' ( Sāyaṇa ), 'who feeds the cattle' (Griffith). In the footnote Griffith writes : 'Who has performed penance for his theft and at the completion of the service, offered fodder to the stolen animal.' According to Maxmüller 'who has feasted on stolen cattle.' Peterson translates as 'who steals cattle.'

न स स्वो दक्षो वरुण ध्रुतिः सा
सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे
स्वप्नश्चनेदनृतस्य प्रयोता ॥ ६ ॥

न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः । विऽभीदकः । अचित्तिः ॥ अस्ति । ज्यायान् । कनीयसः । उपऽअरे । स्वप्नः । चन । इत् । अनृतस्य । प्रऽयोता ॥६॥

सा० भा०—हे वरुण सः स्वो दक्षः पुरुषस्य स्वभूतं तद्बलं पापप्रवृत्तौ कारणं न भवति । किं तर्हि ध्रुतिः स्थिरा उत्पत्तिसमय एव निर्मिता दैवगतिः कारणम् । 'ध्रु गतिस्थैर्ययोः' इति धातुः सा च ध्रुतिर्वक्ष्यमाणरूपा । सुरा प्रमादकारिणी मन्युः क्रोधश्च गुर्वादिविषयः सन्ननर्थहेतुः । विभीदकः द्युत-साधनोऽक्षः । स च द्यूतेषु पुरुषं प्रेरयन्ननर्थहेतुर्भवति । अचित्तिः अज्ञानम-विवेककारणम् । अत ईदृशी दैवक्लृप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् । अपि च कनीयसः अल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तौ उपारे उपागते समीपे नियन्तृत्वेन स्थितः ज्यायान् अधिक ईश्वरः अस्ति । स एव तं पापे प्रवर्त-यति । तथा चाम्नातम्—'एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' (कौ० उ ३.८) इति । एवं च सति स्वप्नश्चन स्वप्नोऽपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति । इत् इति पूरकः । स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्त इति । अतो ममापराधो दैवागत इति हे वरुण त्वया क्षन्तव्य इति भावः ॥

शब्दा०—न = नहीं, सः = वह, स्वः = अपनी, दक्षः = शक्ति, वरुण = हे वरुण, ध्रुतिः = दैव, सा = वह, सुरा = शराब, मन्युः = क्रोध, विभीदकः = जुआ के पाशे, अचित्तिः = अज्ञान, अस्ति = है, ज्यायान् = बड़े, कनीयसः = छोटे के, उपारे = पाप कार्य में ले जाने के लिये, स्वप्नः = स्वप्न, चन = भी इत् = पादपूरण के लिये एक निपात, अनृतस्य = बुराइयों का, प्रयोता = प्रवृत्त करनेवाला, संयुक्त करनेवाला ।

अन्वय—( हे ) वरुण, सः स्वः दक्षः न ( किन्तु ) सा ध्रुतिः सुरा मन्युः विभीदकः अचित्तिः । कनीयसः उपारे ज्यायान् अस्ति । स्वप्नः चन इत् अनृतस्य प्रयोता ।

हि० अ०—हे वरुण, वह अपनी शक्ति नहीं ( बल्कि ) दैव, शराब, क्रोध, जुआ, तथा अज्ञान है ( जिससे मनुष्य पाप करता है ); छोटे के पापकार्य में बड़े ( भी कारण ) होते हैं; स्वप्न भी बुराइयों से संयुक्त करनेवाला है ।

*Trans.*—O Varuṇa, it is not one's own power, ( but ) fate, wine, wrath, dice and ignorance ( that cause man to commit sin ). There is senior in leading to astray the younger ; even a dream leads to the commitment of unrighteous act.

*Notes*—दक्षः—'Insight,' 'understanding', 'intention' ( Grassmann ), 'power,' 'will-power', 'character' (Geldner ). 'intent' ( Macdonell ), 'own-will' ( Griffith ), 'volitional act' ( Peterson ). ध्रुतिः—'Fate' ( Sāyaṇa ) 'condition' ( Wilson ), 'seduction' ( Grassmann, Griffith, Macdonell ), 'temptation' ( Peterson ), 'accident', 'chance' ( Geldner ). Sāyaṇa derives it from √*dhru* and Grassmann from √*dhvṛ*, ∠*dhurv*, 'to tempt', 'to ruin.' उपारे—Sāyaṇa renders it as उपागते समीपे. Wilson takes it to mean 'in the proximity,' Griffith as 'near to lead astray'. Peterson derives it from उप + √ṛ to commit guilt or unrighteous act. अस्ति उपारे—'There is a senior in the proximity of the junior' ( Wilson ), 'the old is near to lead astray the younger' ( Griffith ), 'there is a mightier one to actuate the lapses of a feebler one' ( Peterson ). चन—Sāyaṇa takes it in the sense of अपि while Griffith and Peterson as a negative particle. प्रयोता—Sāyaṇa derives it from प्र + √*yu* 'to unite' and renders it as प्रकर्षेण मिश्रयिता भवति. Griffith and Peterson derives it from √*yu* 'to separate' and translate as 'rem[illegible]eth' and 'banish' respectively

अरं दासो न मीळ्हुषे करा-
ण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो
गृत्सं राये कवितरो जुनाति ॥ ७ ॥

अरम् । दासः । न । मीळ्हुषे । कराणि । अहम् । देवाय । भूर्णये । अनागाः ॥ अचेतयत् । अचितः । देवः । अर्यः । गृत्सम् । राये । कविऽतरः । जुनाति ॥ ७ ॥

सा० भा०—मीळ्हुषे सेक्त्रे कामानां वर्षित्रे भूर्णये जगतो भर्त्रे देवाय दानादिगुणयुक्ताय वरुणाय अनागाः तत्प्रसादादपापः सन् अहम् अरम् अलं पर्याप्तं कराणि परिचरणं करवाणि । दासो न यथा भृत्यः स्वामिने सम्यक् परिचरति तद्वत् । अर्यः स्वामी स च देवः अचितः अजानतोऽस्मान् अचेतयत् चेतयतु प्रज्ञापयतु । गृत्सं स्तोतारं च कवितरः प्राज्ञतरो देवः राये धनाय धनप्राप्त्यर्थं जुनाति जुनातु प्रेरयतु ॥

शब्दा०—अरम् = पर्याप्त रूप में, दासः = नौकर, न = तरह, मीळ्हुषे = कामनाओं को पूर्ण करनेवाले, कराणि = करूँ अहम् = मैं, देवाय = देव की, भूर्णये = जगत् का भरण-पोषण करनेवाले, अनागाः = पापरहित होकर, अचेतयत् = प्रबुद्ध करे, अचितः = अज्ञान से, देवः = देव, अर्यः = सबका स्वामी, गृत्सम् = स्तुति गायक को, राये = धन के लिये, कवितरः = बुद्धिमान्, जुनाति = प्रेरित करे ।

अन्वयः—मीळ्हुषे भूर्णये देवाय अनागाः अहं दासः न अरं कराणि । अर्यः देवः अचितः अचेतयत्; कवितरः गृत्सं राये जुनाति ।

हि० अ०—कामनाओं को पूर्ण करनेवाले तथा जगत् का भरण-पोषण करनेवाले देव की मैं पापरहित ( होकर ) पर्याप्त मात्रा में नौकर की तरह सेवा करूँ । ( सबका ) संरक्षक देव अज्ञान से प्रबुद्ध करे; स्तुतिगायक को वह बुद्धिमान् धन के लिये प्रेरित करे ।

***Trans.***—Freed from sin, may I serve diligently as a servant, the bounteous, the lord of the world. May

the divine lord awake us from ignorance. May the wiser one lead the singer to riches.

*Notes*—मीळ्हुषे—Dat. sing. of मीढ्वस् from √*mih* 'to pour' with the suffix क्वसु. The root is always reduplicated when क्वसु is added to it. But मीढ्वस् is exception to that rule. 'showerer of benefits (Wilson) 'bounteous' (Griffith). कराणि—√*kṛ* 'to make' 'root-aorist, subju. 1st. sing. भूर्णये—Dat. sing of भूर्णि; 'lord of the world' (Sāyaṇa), 'inclined to anger' (Griffith), 'impetuous' (Peterson). अचेतयत्—√*cit* 'to know,' caus. impf, 3rd. sing. Sāyaṇa renders it as चेतयतु प्रज्ञापयतु'. जुनाति—√*ju* 'to urge on', 'to speed'. pres 3rd. sing.

अयं सु तुभ्यं वरुण स्वधावो
हृदि स्तोम उपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो अस्तु
यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

अयम् । सु । तुभ्यम् । वरुण । स्वधाऽवः । हृदि । स्तोमः । उपऽश्रितः । चित् । अस्तु ॥ शम् । नः । क्षेमे । शम् । ऊँ इति । योगे । नः । अस्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥८॥

सा० भा०—हे स्वधावः अन्नवन् वरुण तुभ्यं त्वदर्थं क्रियमाणः अयम् एतत्सूक्तात्मकं स्तोमः स्तोत्रं हृदि त्वदीये हृदये सु सुष्ठु उपाश्रितः उपगतः समवेतः अस्तु । चित् इति पूरकः । अप्राप्तस्य प्रापणं योगः प्राप्तस्य रक्षणं क्षेमः । नः अस्मदीये क्षेमे रक्षणे शम् उपद्रवाणां शमनम् अस्तु । योगे च नः अस्मदीये प्रापणे शमु शमनमेवास्तूपद्रवाणाम् । हे वरुणादयो देवाः नः अस्मान् सर्वदा स्वस्तिभिः अभिनाशैः पात रक्षत ॥

शब्दा०—अयम् = यह, सु = सुन्दर, तुभ्यम् = तुम्हारे लिये, वरुण = हे वरुण, स्वधावः = हे शक्तिशाली, हृदि = हृदय में, स्तोमः = स्तोत्र, उपश्रितः = स्थित, चित् = पदपूरण के लिये प्रयुक्त निपात, अस्तु = हो, शम् = कल्याण, नः = हमारा, क्षेमे = रक्षा में शमु = कल्याण, उ = निश्चित अर्थ

का वाचक एक निपात, योगे = प्राप्ति में, नः = हमारा, अस्तु = हो, यूयम् = तुम लोग, पात = रक्षा करो, स्वस्तिभिः = आशीर्वाद से, सदा = सर्वदा, नः = हमारी।

अन्वय—( हे ) स्वधावः वरुण, तुभ्यं ( क्रियमाणः ) अयं स्तोमः हृदि उपश्रितः चिद् अस्तु ! नः क्षेमे शम् उ, नः योगे ( च शम् ) अस्तु। (हे देवाः) यूयं स्वस्तिभिः नः सदा पात।

हि० अ०—हे शक्तिशाली वरुण, तुम्हारे लिए ( निर्मित ) यह स्तोत्र तुम्हारे हृदय तक अच्छी प्रकार से पहुँचे। रक्षा में हमारा कल्याण हो, प्राप्ति में हमारा कल्याण हो। हे देवो, तुम लोग अपने आशीर्वाद से हमारी सर्वदा रक्षा करो।

*Trans.*—O Varuṇa, the powerful, let this hymn, ( fashioned ) for thee, be well resorted in ( thy ) heart. Let the bliss be ours in possession, bliss also in acquisition. ( O Gods, ) you protect us ever with ( your ) blessings.

*Notes*—उपश्रितः—उप + √ *śri* 'to resort' with the suffix क्त; for accent see पुरोहितम् ( ṚV. I. 1. 1 ). अस्तु—√ *as* 'to be' impv. 3rd. sing पात—√ *pā* 'to protect', impv. 2nd. plu.

# SOMA

'सोमस्य धारा' इति पञ्चर्चं त्रयोदशं सूक्तं भारद्वाजस्य वसुनाम्न आर्षं जागतं पवमानसोमदेवताकम् । तथा चानुक्रान्तं—'सोमस्य वसुर्भारद्वाजः' इति । गतो विनियोगः ।

सोमस्य धारा पवते नृचक्षस
ऋतेन देवान्हवते दिवस्परि ।
बृहस्पते रवथेना वि दिद्युते
समुद्रासो न सवनानि विव्यचुः ॥ १ ॥

सोमस्य । धारा । पवते । नृचक्षसः । ऋतेन । देवान् । हवते । दिवः । परि ॥ बृहस्पतेः । रवथेन । वि । दिद्युते । समुद्रासः । न । सवनानि । विव्यचुः ॥ १ ॥

सा० भा०—सोमस्य अभिषूयमाणस्य धारा पवते श्चोतते । कीदृशस्य सोमस्य । नृचक्षसः नृणां यजमानानां द्रष्टुः । स च ऋतेन यज्ञेन देवान् सोमभाज इन्द्रादीन् हवते । कुत्र । दिवस्परि द्युलोकस्योपरि वर्तमानान् । बृहस्पतेः मन्त्र-पालकस्य स्तोतुः रवथेन शब्देन स्तोत्रेण वि दिद्युते विद्योतते । समुद्रासो न समुद्रा इव पृथिवीं सवनानि यज्ञसंबन्धीनि विव्यचुः व्याप्नुवन्ति ॥

शब्दा०—सोमस्य = सोम की, धारा=धारा, पवते=बहती है, नृचक्षसः = मनुष्य जाति को देखनेवाले, ऋतेन = यज्ञ के द्वारा. देवान् = देवताओं को, हवते = बुलाता है, दिवः = आकाश के, परि = ऊपर, बृहस्पतेः = बृहस्पति की, रवथेन = गर्जन से, वि दिद्युते = चमकता है. समुद्रासः = नदियां, न = तरह, सवनानि = प्रातरादि सवन, विव्यचुः = व्याप्त कर रहे हैं ।

अन्वय—नृचक्षसः सोमस्य धारा पवते । (सः) ऋतेन दिवः परि देवान् हवते । बृहस्पतेः रवथेन वि दिद्युते । सवनानि समुद्रासः न विव्यचुः ।

हि० अ०—मनुष्य जाति को देखनेवाले सोम की धारा बहती है। यह यज्ञ के द्वारा आकाश के ऊपर ( रहनेवाले ) देवताओं को बुलाता है। बृहस्पति की गर्जन से यह चमकता है। ( प्रातरादि ) सवन ( पृथिवी को ) नदियों की तरह व्याप्त कर रहे हैं।

***Trans.***—The stream of Soma, the beholder of mankind, flows forth by sacrifice it calls the gods (who dwell) above the heaven It shines forth by the speech of Bṛihaspati. The libations pervade ( the earth ) like rivers.

***Notes***—पवते—√*pū* 'to flow', Ātm. pres. 3rd. sing. हवते—√*hū* 'to call', Ātm. pres. 3rd. sing दिवस्परि—'Above the sky' ( Sāyaṇa ), 'from the heaven' ( Griffith ). बृहस्पतेः—'Of the sacrificer ( Sāyaṇa ), 'of Bṛhaspati' ( Griffith ), of Agni' ( Ludwig ). रवथेन—Instr. sing of रवथ from √*rav* 'to make sound, with the suffix थक्. दिद्युते—√*dyut* 'to shine', perf. Ātm. 3rd. sing. सवनानि—√su 'to press' with the suffix ल्युट्; Savana is a form of daily sacrifice in which soma is pressed and offered to gods. There are three Savanas: prātar-savana, mādhyandina-savana and sāyam-savana. विव्यचुः—√*vyac* 'to extend', impf. without augment, 3rd. plu. न—According to Griffith it is a negative particle, while Sāyaṇa takes it as a particle of comparison.

यं त्वा वाजिन्नघ्न्या अभ्यनूषता-
योहतं योनिमा रोहसि द्युमान् ।
मघोनामायुः प्रतिरन्महि श्रव
इन्द्राय सोम पवसे वृषा मदः ॥ २ ॥

यम् । त्वा । वाजिन् । अघ्न्याः । अभि । अनूषत । अयःऽहतम् । योनिम् । आ । रोहसि । द्युऽमान् ॥ मघोनाम् । आयुः । प्रऽतिरन् । महि । श्रवः । इन्द्राय । सोम । पवसे । वृषा । मदः ॥ २ ॥

सा० भा०—हे वाजिन् अन्नवन् सोम यं त्वा त्वाम् अघ्न्याः अहननीयाः गावः अभ्यनूषत अभिष्टुवन्ति । आशिरार्थं स्थिताः शब्दायन्त इत्यर्थः । स त्वम् अयोहतम् । अय इति हिरण्यनाम । तेन तद्वान् पाणिर्लक्ष्यते । हिरण्मयेन पाणिना हतं संस्कृतं योनिं स्थानं आ रोहसि द्युमान् दीप्तः सन् । 'अभियोनिमयोहतम्' (ऋ० सं० ९. १. २) इति ह्युक्तम् । किं च हे सोम मघोनां हविष्मतां यजमानानाम् आयुः आयुष्यं महि महत् श्रवः अन्नं यशो वा प्रतिरन् वर्धयन् इन्द्राय इन्द्रार्थं पवसे पूयसे । वृषा वर्षको मदः मदकरश्च त्वम् ।

शब्दा०—यम् = जिस, त्वा = तुमको वाजिन् = हे अन्न देनेवाले, अघ्न्याः = गायें, अभि अनूषत = स्तुति करती हैं, अयोहतम = स्वर्णमय हाथ द्वारा निर्मित, योनिम् = स्थान, आ रोहसि = चढ़ते हो, द्युमान् = प्रकाशमान, मघोनाम् = उदार दानियो की, आयुः = उम्र, प्रतिरन् = बढ़ाते हुये, महि = महान्, श्रवः = यश; इन्द्राय = इन्द्र के लिये, सोम = हे सोम पवसे = बहते हो, वृषा = शक्तिशाली, मदः = मदकारक ।

अन्वय—( हे ) वाजिन् यं त्वा अघ्न्याः अभि अनूषत, ( सः ) द्युमान् ( त्वम् ) अयोहतं योनिम् आ रोहसि । मघोनाम् आयुः महि श्रवः प्रतिरन् ( हे ) सोम, इन्द्राय वृषा मदः ( त्वम् ) पवसे ।

हि० अ०—हे अन्न देनेवाले, जिस तुमको गायें स्तुति करती हैं, ( वेह ) प्रकाशमान ( तुम ) स्वर्णमय हाथ द्वारा निर्मित स्थान पर चढ़ते हो । उदार दानियों की आयु तथा ( उनके ) महान् यश को बढ़ाते हुये, हे सोम, इन्द्र के लिये शक्तिशाली और मदकारक ( पेय तुम ) बहते हो ।

*Trans.*—O giver of food, thou, whom the kine praise, mountest thy station, bright, shining, fashioned by golden hands. Extending the life and great fame of the liberal givers, O Soma, thou the mighty and exhilarating ( drink ) for Indra, flowest.

*Notes*—अनूषत—√*nu* 'to praise, Ātm. 's'-aorist, 3rd. plu. ; not unaccented because preceded by अभि. रोहसि—√*ruh* 'to ascend', pres. 2nd. sing. प्रतिरन्—√*tṛ* with प्र 'to extend' with the suffix शतृ ; nom. sing. पवसे—√*pū* 'to flow' pres. 2nd. sing.

एन्द्रस्य कुक्षा पवते मदिन्तम
ऊर्जं वसानः श्रवसे सुमङ्गलः ।
प्रत्यङ् स विश्वा भुवनाभि पप्रथे
क्रीळन्हरिरत्यः स्यन्दते वृषा ॥ ३ ॥

आ । इन्द्रस्य । कुक्षा । पवते । मदिन्ऽतमः । ऊर्जम् । वसानः । श्रवसे । सुऽमङ्गलः ॥ प्रत्यङ् । सः । विश्वा । भुवना । अभि । पप्रथे । क्रीळन् । हरिः । अत्यः । स्यन्दते । वृषा ॥ ३ ॥

सा० भा०—अयं सोमः इन्द्रस्य कुक्षा कुक्षौ आ पवते आसिच्यते । किमर्थम् । श्रवसे तस्यान्नाय यष्टुर्वा अन्नसिद्ध्यर्थम् । सोमो विशेष्यते । मदिन्तमः मादयितृतमः ऊर्जं वसानः बलकरं रसमाच्छादयन् । 'अपो वसानः' ( ऋ० सं०-९. ७८. १ ) इति श्रुतम् । सुमङ्गलः शोभनमङ्गलप्रदः । स सोमः प्रत्यङ् विश्वा भुवना सर्वाणि भूतजातानि अभि पप्रथे अभिप्रथयति । दिवि उदितः सन् क्रीळन् वेद्यां संक्रीडमानः हरिः हरितवर्णः अत्यः अतनकुशलः वृषा वर्षकः स्यन्दते रसरूपेण ॥

शब्दा०—इन्द्रस्य = इन्द्र के, कुक्षा = पेट में, आ पवते = बहता है, मदिन्तमः = अत्यधिक आनन्दित करनेवाला, ऊर्जम् = शक्ति, वसानः = आवेष्ठित होता हुआ, श्रवसे = अन्न पचाने के लिये, सुमङ्गलः = मङ्गलदायी, प्रत्यङ् = ओर, विश्वा = सम्पूर्ण, भुवना = प्राणियों की, सः = उसने, अभि पप्रथे = फैलाया है, क्रीळन् = खेलता हुआ, हरिः = हरे वर्णवाला, अत्यः = शीघ्रगामी, स्यन्दते = वह रहा है, वृषा = शक्तिशाली ।

अन्वय—मदिन्तमः सुमङ्गलः ऊर्जं वसानः श्रवसे इन्द्रस्य कुक्षा आ पवते । सः विश्वा भुवना प्रत्यङ् अभि पप्रथे । हरिः अत्यः वृषा क्रीळन् स्यन्दते ।

हिं० अ०—अत्यधिक आनन्दित करनेवाला, मङ्गलदायी ( सोम ) शक्ति से आवेष्ठित होता हुआ अन्न को पचाने के लिये इन्द्र के पेट में बहता है । उसने सम्पूर्ण प्राणियों की ओर ( अपने को ) फैलाया है । ( वेदी पर ) खेलता हुआ, हरे वर्णवाला, शीघ्रगामी ( सोम ) बह रहा है ।

*Trans.*—The most exhilarating, the auspicious one flows in the belly of Indra clothing ( himself ) with vigour.

for the digestion of food. He spreads (himself) towards all beings. Sporting (on the altar) the green coloured, the swift-moving, the vigorous flows forth.

*Notes*—कुक्षा—Loc. sing. of कुक्षि. In Vedic language words ending in इ frequently have आ termination in place of औ in loc. sing. पवते—√*pū* 'to flow', pres. 3rd. sing. वसानः—√*vas* 'to wear', with the suffix शानच्; nom. sing. श्रवसे—For the digestion of food (Sāyaṇa), 'for fame' (Griffith). सुमङ्गलः—Auspicious one; Bahuvrīhi compd. accented on the second member (नञ्सुभ्याम्—Pān VI.2.172.). पप्रथे—√*prath* 'to spread', perf. Ātm. 3rd. sing. क्रीळन्—√*krīḍ* 'to play', with the suffix शतृ; nom. sing. अत्यः—From √*at* 'to go.' स्यन्दते—*syand* 'to flow', Ātm. pres. 3rd. sing.

तं त्वा देवेभ्यो मधुमत्तमं नरः
सहस्रधारं दुहते दश क्षिपः।
नृभिः सोम प्रच्युतो ग्रावभिः सुतो
विश्वान्देवाँ आ पवस्वा सहस्रजित् ॥ ४ ॥

तम्। त्वा। देवेभ्यः। मधुमत्ऽतमम्। नरः। सहस्रऽधारम्। दुहते। दश। क्षिपः॥ नृऽभिः। सोम। प्रऽच्युतः। ग्रावऽभिः। सुतः। विश्वान्। देवान्। आ। पवस्व। सहस्रऽजित् ॥ ४ ॥

सा० भा०—हे सोम तं तादृशं त्वा त्वां देवेभ्यः इन्द्राद्यर्थं मधुमत्तमम् अतिशयेन मधुमन्तं सहस्रधारं बहुधारायुक्तं दुहते दुहन्ति। के। नरः। नेतार ऋत्विजः दश क्षिपः तेषां दशसंख्याका अङ्गुलयश्च। हे सोम नृभिः मनुष्यैः प्रच्युतः ग्रावभिः सुतः अभिषुतस्त्वं सहस्रजित् सहस्रसंख्याकधनस्य जेता सन् विश्वान् आ पवस्व ॥

शब्दा०—तम् = उस, त्वा = तुमको, देवेभ्यः = देवताओं के लिये, मधुमत्तमम् = अत्यधिक मधु से पूर्ण, नरः = मनुष्य, सहस्रधारम् = सहस्रधारा-

वाले, दुहते = दूहती हैं, दश = दस, क्षिपः = अङ्गुलियां, नृभिः = मनुष्यों द्वारा, सोम = हे सोम, प्रच्युतः = लाये गये, ग्रावभिः = पत्थरों द्वारा, सुतः = पीसे गये, विश्वान् = सम्पूर्ण, देवान् = देवताओं के पास, आ पवस्व = बहो, सहस्रजित् = हे हजारों को जीतनेवाले ।

अन्वय :—( हे सोम, ) तं मधुमत्तमं सहस्रधारं त्वा नरः दश क्षिपः देवेभ्यः दुहत । ( हे ) सहस्रजित् सोम, नृभिः प्रच्युतः ग्रावभिः सुतः ( त्वं ) विश्वान् आ पवस्वं ।

हि० अ०—उस अत्यधिक मधु से पूर्ण, सहस्रधारावाले तुमको मनुष्य तथा दस अङ्गुलियां देवताओं के लिये दूहती हैं। हे हजारों को जीतनेवाले सोम, मनुष्यों द्वारा लाये गये पत्थरों से पीसे गये ( तुम ) सम्पूर्ण देवताओं के पास बहो ।

*Trans.*—The men, the ten fingers milk thee as such, the most sweet flavoured, thousand-streamed, for gods. O Soma, driven by men, pressed with stones, O conquerer of thousands, flow forth to all the gods.

*Notes*—सहस्रधारम्—Having thousand-fold streams. Bahuvrihi compd. accented on the first member. दुहते—√*duh* 'to milk' pres. Ātm. 3rd. plu. प्रच्युतः—√*cyu* 'to move' with the suffix क्त. सुतः—Pressed ; √*su* 'to press' with the suffix क्त. पवस्व—*pū* 'to flow' Ātm. impv. 2nd. sing.

तं त्वा हस्तिनो मधुमन्तमद्रिभि-
दुहन्त्यप्सु वृषभं दश क्षिपः ।
इन्द्रं सोम मादयन्दैव्यं जनं
सिन्धोरिवोर्मिः पवमानो अर्षसि ॥ ५ ॥

तम् । त्वा । हस्तिनः । मधुऽमन्तम् । अद्रिऽभिः । दुहन्ति । अप्ऽसु । वृषभम् । दश । क्षिपः ॥ इन्द्रम् । सोम । मादयन् । दैव्यम् । जनम् । सिन्धोःऽइव । ऊर्मिः । पवमानः । अर्षसि ॥५॥

सा० भा०—तं तादृशं मधुमन्तं मधुररसं वृषभं कामानां वर्षकं त्वा त्वां हस्तिनः कुशलस्य दश क्षिपः अङ्गुलयः अद्रिभिः ग्रावभिः अप्सु दुहन्ति । तादृश हे सोम इन्द्रम् अन्यं दैव्यं जनं देवसम्बन्धिनं संघं मादयन् सिन्धोरूर्मिरिव पवमानः पूयमानः सन् अर्षसि गच्छसि ॥

शब्दा०—तम् = उस, त्वा = तुमको, हस्तिनः = कुशल व्यक्ति की, मधुमन्तम् = अत्यधिक मधु से पूर्ण, अद्रिभिः = पत्थरों से, दुहन्ति = दूहती हैं, अप्सु = पानी में, वृषभम् = शक्तिशाली, दश = दस, क्षिपः = अङ्गुलियां । इन्द्रम् = इन्द्र को, सोम = हे सोम, मादयन् = आनन्दित करते हुये, दैव्यम् = स्वर्गीय, जनम् = व्यक्तियों को, सिन्धोरिव = नदी की तरह, ऊर्मिः = धारा, पवमानः = छलनी से निकल कर, अर्षसि = बहते हो ।

अन्वय—हस्तिनः दश क्षिपः तं मधुमन्तमं वृषभं त्वा अद्रिभिः अप्सु दुहन्ति । ( हे ) सोम, इन्द्रं दैव्यं जनं मादयन् सिन्धोः ऊर्मिः इव पवमानः अर्षसि ।

हि० अ०—कुशल व्यक्ति की दस अंगुलियां उस अत्यधिक मधु से पूर्ण, शक्तिशाली तुमको पत्थरों से पानी में दूहती हैं । हे सोम, इन्द्र को तथा स्वर्गीय जनों को आनन्दित करते हुये छलनी से निकलकर नदी की धारा की तरह तेजी से बहते हो ।

***Trans.***—The ten fingers of the deft-handed ( man ) milk thee forth with stones into waters, (thee) the most sweet-flavoured, the mighty. O Soma, exhilarating Indra and the divine people thou rushest forth, when filtered, like the wave of a river.

***Notes***—दुहन्ति—√ *duh* 'to milk', pres. 3rd. plu. ; not unaccented because it begins the pāda. मादयन्—√*mad* 'to exhilarate' + णिच् + शतृ. . पवमानः—√ *pū* 'to cleanse' + शानच् । अर्षसि—√ *ṛṣ* 'to rush', pres. 2nd. sing.

No. 11 X. 108

# SARAMĀ-PAṆI-SAṀVĀDA

'किमिच्छन्ती' इत्येकादशर्चं नवमं सूक्तं त्रैष्टुभम् ऐन्द्रपुरोहितस्य बृहस्पतेर्गोषु वलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पति-प्रेरितेनेन्द्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदीमुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नन्तरे पणय इदं वृत्तान्तमवगच्छन्त एनां मित्रीकर्तुं संवादमकुर्वन्। तत्र प्रथमातृतीयाद्या अयुजोऽन्त्यावर्जिताः पणीनां वाक्यानि। अत्र त ऋषयः सरमा देवता। द्वितीया-चतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि। अतस्तासु सर्षिः पणयो देवता। तथा चानुक्रान्तं—'किमिच्छन्ती पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनिमिन्द्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः प्रोचुः सा तान्युग्मान्त्या-भिरनिच्छन्ती प्रत्याचष्टे इति। गतो विनियोगः॥

किमि॒च्छन्त॑ स॒रमा॒ प्रेदमा॑नड्
दू॒रे ह्यध्वा॒ जगु॑रिः परा॒चैः।
कास्मेहि॑तिः॒ का परि॑तक्म्यासी-
त्कु॒थं र॒साया॑ अतरः॒ पयां॑सि॥ १॥

किम्। इ॒च्छन्ती॑। स॒रमा॑। प्र। इ॒दम्। आ॒न॒ट्। दू॒रे। हि। अध्वा॑। जगु॑रिः। परा॒चैः॥ का। अ॒स्मेऽहि॑तिः। का। परि॑ऽतक्म्या। आ॒सी॒त्। कु॒थम्। र॒साया॑ः। अ॒त॒रः॑। पयां॑सि॥ १॥

सा० भा०—अनयागच्छन्ती सरमां दृष्ट्वा पणयो वदन्ति। सरमा शरण-शीलैतन्नामिका देवशुनी किमिच्छन्ती किं प्रार्थयमाना सती इदं अस्मदीयं स्थानं प्र आनट् प्राप्नोत्। आङ्पूर्वो नशि व्याप्तिकर्मा। तस्य लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक्। छन्दस्यपि दृश्यत इत्याडागमः। पराचैः पराञ्चि पराङ्मुखा-न्यावृत्तिवर्जितानि यानि गमनानि तैः जगुरिः उद्गूर्णः। महता प्रयत्नेनापि

गन्तुं न शक्यत इत्यर्थः । 'गृ निगरणे' । 'आदृगमहन' इत्यादिना किन्प्रत्ययः । 'बहुलं छन्दसि' ( पा० सू० ७. १. १०३ ) इत्युत्वम् । तादृशोऽयम् अध्वा दूरे हि विप्रकृष्टः खलु । यद्वा । पराचैः पराङ्मनैर्जगुरिरित्यर्थे गन्त्री पार्ष्णिभागमनालोकमाना सतीदं स्थानं प्राप्नोति । दूरेऽयमध्वा यदृच्छया गन्तुं न शक्यते । अतो वयमेतां पृच्छामः । हे सरमे का कीदृशी अस्मेहितिः । कोऽस्मास्वर्थहितिः । कोऽस्मासु त्वदपेक्षितार्थो निहितः । यद्वा । अस्मासु कोऽर्थो गतः दधातेर्हिनोतेर्वा क्तिनी रूपम् । आगच्छन्त्यास्तव का कीदृशी परितक्म्या रात्रिः आसीत् । यद्वा । तकतिर्गत्यर्थः । परितकनं परितो गमनं भ्रमणं वा कीदृशमासीत् । कथं च रसायाः शब्दायमानाया अन्तरिक्षनद्या योजनशतविस्तीर्णायाः पयांसि उदकानि अतरः तीर्णवत्यसि । एतद्वद । 'अत्र किमिच्छन्ती सरमेदं प्रानट्' ( निरु० ११.२५ ) इत्यादिकं निरुक्तं द्रष्टव्यम् ॥

शब्दा०—किम् = क्या, इच्छन्ती = इच्छा करती हुई, सरमा = सरमा नाम की देवशुनी, जिसे इन्द्र ने दूती बनाकर पणियों के पास भेजा था, इदम् = यहाँ, प्र आनट् = आई है, दूरे = दूर, हि = क्योंकि, अध्वा = मार्ग, जगुरिः = उमड़ा हुआ, पराचैः = गमनागमन से रहित, का = कौन सा, अस्मेहितिः = हममें तुम्हारा अभिप्रेत अर्थ निहित है, का = कैसी, परितक्म्या = यात्रा, आसीत् = थी, कथम् = किस प्रकार, रसायाः = रसा नामक नदी के, अतरः = पार किया, पयांसि = जल को ।

अन्वय—सरमा किम् इच्छन्ती इदं प्र आनट् । पराचैः जगुरिः अध्वा दूरे हि । का अस्मेहितिः, का परितक्म्या आसीत् ? कथं ( च ) रसायाः पयांसिः अतरः ?

हि० अ०—सरमा क्या इच्छा करती हुई इस स्थान पर पहुँची है; क्योंकि मार्ग बहुत दूर, उमड़ा हुआ तथा गमनागमन से रहित था । हममें तुम्हारा कौन सा अभिप्रेत अर्थ निहित है ? तुम्हारी यात्रा कैसी थी ? रसा के जल को तुमने कैसे पार किया ?

*Trans.*—Desiring what Saramā has attained this place, for, the path is far away, protuberant, devoid of going ; what ( your desired ) is placed in us ? How was the journey ? How did you cross the waters of the Rasā.

*Notes*—इच्छन्ती—√ *icch* 'to desire' + शतृ + ङीप् ; nom. sing. आनट्—√ *naś* to attain' root-aorist. 3rd. sing. जगुरिः—

Sāyaṇa derives it from √gṛ 'to swallow' with the suffix क्तिन्, while Yāska followed by Grassmann from √gā or √gam 'to go.' Oldenberg derives it from √jṛ or jur 'to waste away'; 'protuberant i.e. not fit to travel on' (Sāyaṇa). 'losing itself or causing one to be lost or ingulfed' (Geldner), 'wearying', 'exhausting' (Oldenderg), 'engulfing' (Peterson). पराचैः—Instr. plu. of पराच. Sāyaṇa derives it from अञ्च with परा. का अस्मेहितिः—हिति is derived from √dhā 'to put' or √hi 'to impel' with the suffix क्तिन्; 'what (your desired) is placed in us' (Sāyaṇa). 'what charges hast thou for us' (Griffith). 'what is the message (placed) for us' (Peterson). परितक्म्या—According to Yāska whom Sāyaṇa follows परितक्म्या means रात्रि. It is derived from परि+तक्म् (√तक् 'to go')+य. तक्म means heat. The sun is hot and it goes around the night ; hence, the latter is called परितक्म्या (परितक्म्या रात्रिः । परितः एनां तक्म । तक्म इति उष्णनाम । तकते इति सतः—Nir. XI. 25). Sāyana takes it also to mean 'going around' (तकतिर्गत्यर्थः । परितकनं परितो गमनं भ्रमणं वा). Peterson takes it to mean 'running about', 'confusion,' 'tumult of battle,' 'melee.' Here परितक्म्या should be taken as to mean journey. रसायाः—According to Sāyaṇa it is a river of middle region, hundred yojana wide. Griffith takes it to refer here to a mythical stream that flows around the atmosphere and the earth. Some suggest it to be a river of Punjab, probably an affluent of Sindhu

इन्द्रस्य दूतीरिषिता चरामि
 मह इच्छन्ती पणयो निधीन्वः ।
अतिष्कदो भियसा तन्न आव-
 त्तथा रसाया अतरं पयांसि ॥ २ ॥

इन्द्रस्य । दूती: । इषिता । चरामि । मह: । इच्छन्ती । पणय: । निऽधीन् । व: ॥ अतिऽस्कद: । भियसा । तत् । न: । आवत् । तथा । रसाया: । अतरम् । पयांसि ॥ २ ॥

सा० भा०—अनया तान् सरमा प्रत्युवाच । हे पणय: एतन्नामका असुरा: इन्द्रस्य दूती: । सुपां सुलुक्' इति प्रथमैकवचनस्य सुश्छान्दस: । अहम् इषिता तेनैव प्रेषिता सती चरामि । युष्मदीयं स्थानमागच्छामि । किमर्थम् । व: युष्मदीयान् युष्मदीये पर्वतेऽधिष्ठापितान् मह: महत: निधीन् बृहस्पतेर्गोनिधीन् इच्छन्ती कामयमाना सती चरामि । किंच अतिष्कद: । 'स्कन्दिर्गतिशोषणयो:' । भावे क्विप् । अतिष्कन्दनादतिक्रमणाज्जातेन भियसा भयेन तत् नदीजलं न: । पूजाया बहुवचनम् । माम् आवत् अरक्षत तथा तेन प्रकारेण रसाया: नद्या: पयांसि उदकानि अतरं तीर्णवत्यस्मि ॥

शब्दा०—इन्द्रस्य = इन्द्र की, दूती: = संदेशवाहिका के रूप में, इषिता = भेजी गई, चरामि = विचरण कर रही हूँ, मह: = महान्, इच्छन्ती = इच्छा करती हुई, पणय: = हे पणियो, निधीन् = खजाने को, व: = तुम्हारे, अतिष्कद: = कूदकर पार कर जाने के, भियसा = डर से, तत् = उस रसा के जल ने, न: = हमारी, आवत् = रक्षा की, तथा = इस प्रकार, रसाया: = रसा के, अतरम् = पार किया, पयांसि = जल को ।

अन्वय—( हे ) पणय:, इन्द्रस्य दूती: (तेन एव ) इषिता ( अहं ) व: मह: निधीन् इच्छन्ती चरामि । अतिस्कद: भियसा तत् न: आवत् । तथा रसाया: पयांसि अतरम् ॥ २ ॥

हिं० अ०—इन्द्र की दूती, उसके द्वारा भेजी गई मैं, हे पणियो, तुम लोगों के प्रभूत धन की इच्छा करती हुई घूम रही हूँ । ( मेरे ) कूदने के भय से उस ( रसा के जल ) ने मेरी सहायता की; इस प्रकार रसा के जल को मैंने पार किया ।

*Trans*—As a messenger of Indra, sent by him, I wander, O Paṇis, seeking your great treasure. Through the fear of ( my ) overleaping, that ( the water of Rasā ) helped me; thus, I crossed the waters of the Rasā.

***Notes***—इषिता—√ *iṣ* 'to send,' with the suffix क्त; fem. nom. sing. चरामि—√ *car* 'to move,' pres. 1st. sing. अतिष्क्रदः—Abl. infinitive in अस् from √ *skand* 'to leap,' governed by the preposition अति; it should be construed with भियसा. Sāyaṇa renders it by 'अतिष्कन्दनादतिक्रमणाज्जातेन भियसा भयेन' (through the fear of overleaping); Peterson and Geldner adopt this interpretation. Grassmann followed by Oldenberg renders it by 'as I stood afraid of the leap'; Griffith translates as 'from the fear of crossing'. तत्—Sāyaṇa takes it for नदीजलं while Geldner as an adverb of time supplying रसा understood as the subject. Peterson takes तत् 'that' to be the subject and according to him, it as a parenthetical conjunction. Griffith takes it to mean 'this'. आवत्—√ *av* 'to protect,' impf. 3rd. sing. अतरम्—√ *tṛ* 'to cross' impf. 1st. sing.

कीदृङ्ङिन्द्रः सरमे का दृशीका
यस्येदं दूतीरसरः पराकात् ।
आ च गच्छान्मित्रमेना दधा-
माथा गवां गोपतिर्नो भवाति ॥ ३ ॥

कीदृङ् । इन्द्रः । सरमे । का । दृशीका । यस्य । इदम् । दूतीः । असरः । पराकात् ॥ आ । च । गच्छात् । मित्रम् । एन । दधाम । अथ । गवाम् । गोऽपतिः । नः । भवाति ॥ ३ ॥

सा० भा०—तेषां वाक्यम् । हे सरमे तव स्वामी इन्द्रः कीदृक् । कियत्पराक्रमवान् । का दृशीका । तस्य कीदृशी दृष्टिः । दृष्टिरूपा सेना कियती । यस्य दूतीः दूती त्वम् इदम् अस्मदीयं स्थानं पराकात् अतिदूरात् असरः आगमः । इति तानुक्त्वा इदानीं ते परस्परमाहुः । एषा सरमा आ गच्छात् च आगच्छतु च । गमेर्लेट्याडागमः । स्वामी भवाति भवतु । न ह्येकस्या गोः किंतु बहूनां गवां स्वामी भवतु । वृत्त्यवृत्तिभ्यां स्वामित्वं बाहुल्यं च विवक्ष्यते ॥

शब्दा०—कीदृङ् = कैसा, इन्द्रः = इन्द्र, सरमे = हे सरमा, का = कैसी, दृशीका = दृष्टि, यस्य = जिसकी, इदम् = यहां, दूतीः = दूती, असरः = आई हो, पराकात् = बहुत दूर से, च = अगर, आगच्छात् = आवे, मित्रम् = मित्र, एन = उसको, दधाम = बनावें, अथ = तब, गवाम् = गायों का, गोपतिः = गायों का स्वामी, नः = हमारी, भवाति = होगा ।

अन्वय—( हे ) सरमे, कीदृङ् इन्द्रः, का दृशीका, यस्य दूतीः ( त्वम् ) पराकात् इदम् असरः । आ च गच्छात् ( वयम् ) एन मित्रं दधाम । अथ नः गवां गोपतिः भवाति ॥ ३ ॥

हि० अ०—हे सरमा इन्द्र कैसा है ? उसकी दृष्टि कैसी है, जिसकी दूती ( तुम ) दूर से यहाँ आई हो ? अगर वह आवे, हम उसे मित्र बनावेंगे; तब वह हमारी गायों का संरक्षक होगा ।

*Trans.*—O Saramā what-like is Indra, what-like his look, whose envoy ( you ) have come here from afar ? If he comes, we shall make him friend ; then he will be the lord of our kine.

*Notes*—दृशीका—Look ; Sāyaṇa takes it to secondarily mean 'army'. Thus according to him, का दृशीका means 'how-much-armied'. Griffith takes it to mean 'what is his aspect'. असरः—√*sṛ* 'to flow', 'a'-aorist, 2nd. sing. च—Peterson takes it in the sense of चेत् 'if.' गच्छात्—√*gam* 'to go', subju. 3rd. sing. ; not unaccented because preceded by च in the sense of चेत् ( निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्—Pāṇ. VIII. 1.30 ). एन—Geldner takes it in the sense of अनेन; according to Oldenberg एन means 'through him'; Griffith takes it to mean 'him' as the secondary object of दधाम, the primary object being मित्रम्. Grassmann followed by Peterson renders it here by 'then' the correlative of च. दधाम—√*dhā* 'to put', subju. 1st. plu. गोपतिः—Tatpuruṣa compd. generally accents the second member, but when the second member is the word पति, it accents the first member ( पत्यावैश्वर्ये—Pāṇ. VI. 2.18 ) भवाति—√*bhū* 'to be', subju. 3rd. sing.

नाहं तं वेद दभ्यं दभत्स
यस्येदं दूतीरसरं पराकात् ।
न तं गूहन्ति स्रवतो गभीरा
हता इन्द्रेण पणयः शयध्वे ॥ ४ ॥

न । अहम् । तम् । वेद । दभ्यम् । दभत् सः । यस्य । इदम् । दूतीः । असरम् । पराकात् ॥ न । तम् । गूहन्ति । स्रवतः । गभीराः । हताः । इन्द्रेण । पणयः । शयध्वे ॥ ४ ॥

सा० भा०—सरमा वदति । हे पणयः तम् इन्द्रं दभ्यं हन्तव्यमिति न वेद न जानामि । दभेः अचो यत् । कथम् । सः इन्द्रः दभत् सर्वान् जनान् दभति हिनस्त्येव । दभेर्लेटिरूपम् वाक्यभेदादनिघातः । यस्य दूतीः दूती अहम् इदं युष्मदीयं स्थानं पराकात् अतिदूराद्देशात् असरं प्राप्ताभूवम् । इन्द्र हिंसितव्यो न भवतीत्यत्र युक्तिमाह । स्रवतः । स्रवणं स्रवः । तमाचरन्ति । आचारार्थे क्विप् । तुगागमः । जसिरूपम् । स्रवणशीलाः गभीराः गम्भीराः नद्यः तम् इन्द्रं न गूहन्ति न संवृण्वन्ति । नाच्छादयन्ति । किन्त्वाविष्कुर्वन्ति । वयं यस्य महिम्ना समुद्रं प्रतिसरामः । तस्मादहिंस्य इत्येनं प्रकटीकुर्वन्ति । 'गुहू संवरणे' । भौवादिक तस्माद्धे पणयः यूयम् इन्द्रेण तादृशपराक्रमेण हताः सन्तः शयध्वे । 'शीङ् स्वप्ने' । 'बहुलं छन्दसि' इति शपो लुगभावः ॥

शब्दा०—न = नहीं, अहम् = मै, तम् = उसको, वेद = जानती हूँ, दभ्यम् = कष्ट पहुँचाया जानेवाला, दभत् = कष्ट पहुचाता है, सः = वह, यस्य = जिसकी, इदम् = यहाँ, दूतीः = दूती, असरम् = आई हूँ, पराकात् = बहुत दूर से, न = नहीं, तम् = उसको, गूहन्ति = छिपा सकती हैं, स्रवतः = बहती हुई, गभीराः = गहरी जलवाली नदियाँ, हताः = मारा जाकर, इन्द्रेण = इन्द्र के द्वारा, पणयः = हे पणियो, शयध्वे = पड़ जावोगे ।

अन्वय—अहं तं दभ्यं न वेद ( अपितु ) सः दभत्, यस्य दूतीः ( अहं ) पराकात् इदम् असरम् । स्रवतः गभीराः तं न गूहन्ति । ( हे ) पणयः, हताः ( यूयं ) शयध्वे ।

हि० अ०—मैं उसको कष्ट पहुँचाया जानेवाला नहीं समझती ; ( अपितु ) वह ( शत्रुओं को ) कष्ट देता है, जिसकी दूती मैं बहुत दूर से यहाँ आई हूँ ।

जहती हुई गहरी जल वाली नदियाँ उसको छिपा नहीं सकतीं; इन्द्र द्वारा मारा जाकर तुम लोग, हे पणियो, ( पृथिवी पर ) पड़ जावोगे ।

*Trans.*—I know him not to be harmed, ( but ) he harms ( others ), whose envoy I have come here from afar. The deep rivers, flowing, cannot conceal him; killed by Indra ( you will ) lie ( on the ground ), O Paṇis.

*Notes*—वेद—√*vid* 'to know', perf. 1st. sing. दभ्यम्—√*dabha* 'to harm', with the suffix यत्. दभत्—√*dabh* 'to harm,' injun. 3rd. sing.; not unaccented, because it begins a new sentence. गूहन्ति—√ *guh* 'to hide', pres. 3rd. plu. स्रवतः—Nom. plu. of स्रु from √*sru* 'to flow' with the suffix क्विप्. हताः—√*han* 'to kill', past part. plu. शयध्वे—√*śī* 'to lie' pres. Ātm. 2nd. plu.

इमा गावः सरमे या ऐच्छः
परि दिवो अन्तान्त्सुभगे पतन्ती ।
कस्त एना अव सृजादयु-
ध्व्युतास्माकमायुधा सन्ति तिग्मा ॥५॥

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अन्तान् । सुऽभगे । पतन्ती ॥ कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत । अस्माकम् । आयुधा । सन्ति । तिग्मा ॥ ५ ॥

सा० भा०—क्रुद्धाः पणयः प्रत्यूचुः । हे सुभगे शोभनसौभाग्यवति हे सरमे दिवः द्युलोकस्य अन्तान् पर्यन्तान् परि पतन्ती कुत्र गावस्तिष्ठन्तीति परितो गच्छन्ती त्वम् इमाः परिदृश्यमानाः या गावः । सुब्व्यत्ययः । गाः ऐच्छः कामयसे ताः एनाः गाः ते त्वदीयः कः अयुध्वी अयुद्ध्वा अव सृजात् । अस्मात् पर्वतादवसृजेत् । विनिर्गमयेत् । सृजेर्लेटि रूपम् । अयुध्वी । युधेः क्त्वाप्रत्यये 'स्नात्व्यादयश्च' इति निपातितः । नञ्समासत्वाल्ल्यबादेशाभावः । नञः प्रकृतिस्वरत्वम् । उत अपि च अस्माकं तिग्मा तीक्ष्णानि आयुधा आयुधानि सन्ति । तस्मादस्माभिर्युद्धमकृत्वा को वा गा आहरति ॥

शब्दा०—इमाः = इन, गावः = गायों को, सरमे = हे सरमा, याः = जिनकी ऐच्छः = इच्छा की है, दिवः = आकाश, अन्तान् = छोर तक, सुभगे = हे कल्याणकारी, परि पतन्ती = चारों तरफ घूमती हुई, कः = कौन, ते = तुममें, एनाः = इनको, अवसृजात् = मुक्त कर सकता है, अयुध्वी = बिना युद्ध किये, उत = और, अस्माकम् = हमारे, आयुधा = शस्त्र, सन्ति = हैं, तिग्मा = तीक्ष्ण ।

अन्वय—( हे ) सुभगे सरमे, दिवः अन्तान् परि पतन्ती इमाः गावः, याः ( त्वम् ) ऐच्छः, एनाः ते कः अयुध्वी अव सृजात् । उत अस्माकम् आयुधा तिग्मा सन्ति ॥ ५ ॥

हि० अ०—हे सरमा, आकाश की छोर तक चारों तरफ घूमती हुई इन गायों को, जिनकी तुमने इच्छा की है, हे सौभाग्यवती, तुममें से कौन मुक्त कर सकता है ? और हमारे शस्त्र भी तीक्ष्ण हैं ।

*Trans.*—O Saramā, these kine, wandering about to the extremes of heaven, which you have desired, O auspicious one, who will make them free without fighting ? And our weapons are sharpened.

*Notes*—गावः—A case of *vibhakti-vyatyaya*. Here गावः in nom. plu. is irregularly used for गाः in acc. plu. ऐच्छः—√*icch* to desire', impf. 2nd. sing.; not unaccented because preceded by याः. अव सृजात्—√*sṛj* with अव 'to set free', subju. 3rd. sing. अयुध्वी—√ *yudh* 'to fight' gerund in त्वी, old form of त्वा; नञ् compd. accented on the first member. आयुधा and तिग्मा—Nom. plu. ( neut. ) termination नि is often dropped ( सुपां सुलुक्०—Pāṇ. VII. 1.31 ).

असेन्या वः पणयो वचां-
स्यनिषव्यास्तन्वः सन्तु पापीः ।
अधृष्टो व एतवा अस्तु पन्था
बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । सन्तु । पापीः ॥ अधृष्टः । वः । एतवै । अस्तु । पन्थाः । बृहस्पतिः । वः । उभया । न । मृळात् ॥ ६ ॥

सा० भा०—सा तान्निराह । हे पणयः वः युष्माकं वचांसि पूर्वोक्तानि वचनानि असेन्या असेन्यानि । सेनार्हाणि न भवन्ति । सेनाशब्दात् तदर्हतीत्यर्थे 'छन्दसि च' इति यत्प्रत्ययः । नञ् समासः । 'ययतोश्चातदर्थे' ( पा० सू०-६. २. १५६ ) इत्युत्तरपदान्तोदात्तत्वम् । तथा तन्वः युष्मदीयानि शरीराणि अनिषव्याः इष्वर्हाणि न सन्तु पराक्रमराहित्येन । पूर्ववत् प्रत्ययः । 'ओर्गुणः' ( पा० सू० ६. ४. १४६ ) इति गुणः । स्वरश्च तादृक् । यतः पापीः पापयुक्तानि खलु । 'छन्दसीवनिपौ' इतीप्रत्ययः । जसः सुः । किंच वः युष्मदीयः पन्थाः मार्गः एतवै । गन्तुम् अधृष्टः असमर्थः अस्तु । 'इण् गतौ' इत्यस्य तुमर्थे तवैप्रत्ययः । 'तवै चान्तश्च युगपत्' ( पा० सू० ६. २. ५१ ) इति धातोः प्रत्ययस्य च युगपदुदात्तत्वम् । तत्र हेतुमाह । वः युष्मदीयान् उभया उभयविधान् पूर्वोक्तास्तन्वो देहान् बृहस्पतिः इन्द्रप्रेरितः न मृळात् न सुखयेत् किंतु बाधेत । 'मृड सुखने' । लेट्यागमः ।

शब्दा०—असेन्या = शस्त्र के आघात से सुरक्षित, वः = तुम्हारे, पणयः = हे पणियो, वचांसि = वचन, अनिषव्याः = बाणों के निशान से सुरक्षित, तन्वः = शरीर, सन्तु = हो सकते हैं, पापीः = पापाचरण करनेवाले, अधृष्टः = अगम्य, वः = तुम्हारे पास, एतवै = जाने के लिये, अस्तु = हो सकता है, पन्थाः = मार्ग, बृहस्पतिः = बृहस्पति देवता, वः = तुम लोगों पर, उभया = दोनों प्रकार से, न = नहीं, मृळात् = दया करेंगे ।

अन्वय—( हे ) पणयः, वः वचांसि असेन्या । ( युष्माकं ) पापीः तन्वः अनिषव्याः सन्तु; वः पन्थाः एतवै अधृष्टः अस्तु; (किन्तु) बृहस्पतिः वः उभया न मृळात् ॥ ६ ॥

हि० अ०—हे पणियो, तुम्हारे वचन शस्त्र के आघात से सुरक्षित, तथा पापी शरीर बाणों के निशान से बचनेवाले हो सकते हैं; तुम्हारे पास पहुँचने के लिये मार्ग अगम्य हो सकता है ; किन्तु किसी ( भी ) प्रकार से बृहस्पति दया नहीं करेंगे ।

*Trans*—O Panis, your speeches ( may be ) not to be wounded, your sinful bodies ( may be ) not to be killed

with arrows ; the path may be invincible to reach you ; but in neither way Bṛhaspati will show you mercy.

*Notes*—असेन्या—A तद्धित word derived from सेना with the suffix यत्; नञ् compd. generally accents the first member, but it also accents the second member when the second member is a तद्धित word, negating the quality ( ययतोश्चातदर्थे—Pāṇ VI. 2.156 ). 'Proof against darts' ( Oldenberg ), 'ready with weapons' ( Grassmann ), 'unsoldierly or not inimical' (Geldner), 'immune from (the blows of) weapons' (Peterson), 'weak for wounding' (Griffith). अनिषव्याः—Not to be killed with arrows; grammatical construction is the same as that of असेन्या. सन्तु—√*as* 'to be', impv. 3rd. plu. अधृष्टः—√*dhṛṣ* 'to dare' + क्त; नञ् compd. accented on the first member; 'invincible, 'unmastered '(Griffith) 'unmolested' (Peterson). एतवै—Dative infinitive in तवै from √*i* to go ; the infinitive in तवै accents both the root and the suffix ( तवै चान्तश्च युगपत्—Pāṇ VI.2.51 ).

अयं निधिः सरमे अद्रिबुध्नो
गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्ति तं पणयो ये सुगोपा
रेकु पदमलकमा जगन्थ ॥७॥

अयम् । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः । वसुऽभिः । निऽऋष्टः ॥ रक्षन्ति । तम् । पणयः । ये । सुऽगोपाः । रेकु । पदम् । अलकम् । आ । जगन्थ ॥७॥

सा० भा०—ते पुनराहुः । हे सरमे अयं निधिः अस्मदीयः कोशः अद्रिबुध्नः । 'बन्ध बन्धने' । 'बन्धेर्ब्रधिबुधी च' (उ० सू० ३.५) इति नप्रत्ययो बुध इत्यादेशः अद्रिबन्धको यस्य तादृशः । तथा आहृतैः गोभिरश्वेभिः अश्वैश्च वसुभिः आत्मी-

येधनैश्च न्यृष्टः नितरां प्राप्तो भवति । 'ऋषी गतौ' । क्तप्रत्यये 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सुगोपाः 'गुपू रक्षणे' । आयप्रत्ययान्तात् क्विपि अतोलोपयलोपौ । सुष्ठु गोपायितारः ये पणयः तेऽसुराः तं निधिं रक्षन्ति पालयन्ति । रेकु । 'रेकृ शङ्कायाम्' औणादिक उप्रत्ययः । शङ्कितं गोभिः शब्दायमानं पदम् अस्माभिः पालितं स्थानम् अलकं व्यर्थमेव आ जगन्थ आगतवत्यसि । गमेर्लिटि रूपम् ॥

शब्दा०—अयम् = यह, निधि = खजाना, सरमे = हे सरमा, अद्रिबुध्नः = पर्वतों से ढका हुआ है, गोभिः = गायों से, अश्वेभिः = अश्वों से, वसुभिः = संपदाओं से, न्यृष्टः = भरा हुआ है, रक्षन्ति = रक्षा करते हैं, तम् = उसको, पणयः = पणि, ये = जो, सुगोपाः = कुशल रक्षक, रेकु = रिक्त, पदम् = स्थान पर, अलकम् = व्यर्थ में, आ जगन्थ = आई हो ।

अन्वय—( हे ) सरमे, गोभिः अश्वेभिः वसुभिः न्यृष्टः अयं निधिः अद्रिबुध्नः । तं ( निधिं ) पणयः, ये सुगोपाः ( सन्ति ), रक्षन्ति । ( त्वं ) रेकु पदम् अलकम् आ जगन्थ ।

हि० अ०—हे सरमा, गायों, अश्वों तथा संपदाओं से भरा हुआ यह खजाना पर्वतों से ढका हुआ है । पणि, जो कुशल रक्षक हैं, इसकी रक्षा करते हैं; तुम व्यर्थ में इस खाली स्थान पर आई हो ।

*Trans.*—O Sarama, this treasure rushed with cows, horses and riches is paved with the rock. Paṇis, who are excellent protectors, guard it ; you have come to an empty place in vain.

*Notes*—अद्रिबुध्नः—Sāyaṇa derives बुध्नः from √*bandh* 'to bind' and takes अद्रिबुध्नः to mean 'bound with the rock'. Griffith takes it to mean 'paved with the rock' and Peterson as 'founded on the rock'. Bahuvrīhi compd. accented on the first member. न्यृष्टः—नि + √ṛṣ 'to rush' + क्त; accented on the first member ( गतिनन्तरः—Pāṇ. VI.2.49 ). रक्षन्ति—√*rakṣ* 'to guard' pres. 3rd. plu. रेकु—Sāyaṇa derives it from √*rek* 'to suspect', 'to doubt' with the suffix उ ; MWD. derives it from √*ric* to leave. रेकु पदम् is a Sanskrit idiom to express

empty or fruitless place. अलंकम्—In vain; the root is √*al* 'to avoid.' आजंगन्थ—आ + √*gam* 'to go', perf. 2nd. sing.

एह गमन्नृषयः सोमशिता
अयास्यो अङ्गिरसो नवग्वाः ।
त एतमूर्वं वि भजन्त गोना-
मथैतद्वचः पणयो वमन्नित् ॥ ८ ॥

आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः । अङ्गिरसः । नवऽग्वाः ॥ ते । एतम् । ऊर्वम् । वि । भजन्त । गोनाम् । अथ । एतत् । वचः । पणयः । वमन् । इत् ॥ ८ ॥

सा० भा०—सरमा पुनः प्रत्युवाच । हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः । 'शिञ् निशाने' । कर्मणि क्तप्रत्ययः । 'तृतीयाकर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । तादृशाः नवग्वाः नवगतयः । यद्वा । अङ्गिरसां सत्रमासीनानां मध्ये केचन नवसु माः सूदतिष्ठन् ते नवग्वाः । अनेन दशग्वा अप्युपलक्ष्यन्ते । उभयविधास्ते अङ्गिरसः ऋषयः तेषां प्रथमः अयास्यः एतन्नामा च ते एते इह युष्मदीये स्थाने आ गमन् आगच्छेयुः । गमेः 'छन्दसि लुङ्लङ्लिटः' इति सार्वकालिको लुङ् । लृदित्वाच्च्लेरङ् । आगत्य च ते गोनाम् । 'गोः पादान्ते' इति छन्दसि नुडागमः । गवाम् ऊर्वं तं समूहं वि भजन्त विभागं कुर्युः । अत्रापि पूर्ववत् सार्वकालिको लुङ । अथ अनन्तरं पणयः यूयम् एतद्वचः पूर्वं यत् व्यर्थमागतासीति यद्वाक्यमवोचत तद्वाक्य तदा वमन्नित् वमन्तः परित्यजन्तः एव भवथ । 'वमु उद्गिरणे' । शतरि 'सुपां सुलुक्' इति जसो लुक् । नुमागमः । संयोगान्तस्य लोपः । यद्वा । लङि रूपम् । स्वरश्छान्दसः ।

शब्दा०-इह = यहाँ, आ गमन्—आयेंगे, ऋषयः = ऋषि, सोमशिताः = सोमपान से उत्तेजित, अयास्यः = अयास्य नामक ऋषि, अङ्गिरसः = अङ्गिरस नामक ऋषि, नवग्वाः = नवग्वा नाम के ऋषि, ते = वे, एतम् = इस, ऊर्वम् = विशाल समूह को, वि भजन्त = बांट लेंगे, अथ = तब, एतत् = इस, वचः = वचन को, पणयः = पणियों को, वमन् = उगलना पड़ेगा, इत् = निश्चित अर्थ का वाचक निपात ।

अन्वय—सोमशिताः अयास्यः अङ्गिरसः नवग्वाः ऋषयः इह आ गमन् । ते एतं गोनाम् ऊर्वं वि भजन्त । अतः एतत् वचः पणयः वमन् इत् ।

हि० अ०—सोमपान से उत्तेजित अयास्य, अङ्गिरस्, तथा नवग्वा आदि ऋषि यहाँ आयेंगे। वे गायों के इस विशाल समूह को बांट लेंगे। तब पणियों को अपने इस वचन को उगलना पड़ेगा।

*Trans.*—Here would come the Soma-sharpened seers viz. Ayāsya, Aṅgirases, Navagvā ( etc. ). They would divide this stall of kine. Then Paṇis would have to vomit this word.

*Notes*—गमन्—√*gam* 'to go' 'a'-aorist. injun. 3rd. plu. सोमशिताः—शिता is past. part. from √śā 'to sharpen' + क्त. Sāyaṇa derives it from √śī 'to aim at'; Tatpuruṣa compd. accented on the first member. See VSB. p. 56 (2). विभजन्त—√*bhaj* with वि 'to divide,' injun. Ātm. 3rd. plu. गोनाम्—Gen. plu. of गो is गवाम्, but when it occurs at the end of a pāda it is written as गोनाम् ( गोः पादान्ते–Pāṇ. VII. 1.57 ). वमन्—√*vam* 'to vomit,' injun. 3rd. plu. ; not unaccented because followed by the emphatic particle इत्. ( Vide VSB p. 66 ( त ) ).

एवा च त्वं सरम आजगन्थ
प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा
अप ते गवां सुभगे भजाम ॥ ९ ॥

एव । च । त्वम् । सरमे । आऽजगन्थ । प्रऽबाधिता । सहसा । दैव्येन ॥ स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः । अप । ते । गवाम् । सुऽभगे । भजाम ॥ ९ ॥

सा० भा०—तथैवमुक्ते सति पणयः प्रणयवाक्यमाहुः । हे सरमे त्वं दैव्येन देवसंबन्धिना सहसा बलेन प्रबाधिता यथा तथा वलपुरं प्राप्य तत्र स्थिता गा

दृष्ट्वा पुनरागच्छेति तेन प्रपीडिता त्वम् एवं चेत् आजगन्थ आगतवत्यसि। चशब्दश्चेदर्थे। 'निपातैर्यद्यदिहन्त' इति तिङो निघाताभावः। गमेर्लिटि थलि रूपम् 'सह सुपा' इत्यत्र सहेति योगविभागात् समासः। 'तिङि चोदात्तवति' इति गतेर्निघातः लित्स्वरः। तर्हि त्वा त्वां स्वसारं भगिनीं कृणवै करवै। समूहापेक्षयैकवचनम्। त्वं तु पुनः मा गाः इन्द्रादीन् मा गच्छ। अपि तर्हि हे सुभगे सरमे ते त्वदीयानां गवां समूहं पर्वतादपगमय्य भजाम। त्वं च वयं च विभजाम विभागं करवामेत्यर्थः।

शब्दा०—एव = इस प्रकार, च = अगर, त्वम् = तुम, सरमे = हे सरमा, आजगन्थ = आई हो, प्रबाधिता = पीड़ित की गई, सहसा = शक्ति से, दै०व्येन = देवताओं की, स्वसारम् = बहन, त्वा = तुमको, कृणवै = बनाते हैं, मा = मत, पुनः = फिर, गाः = जावो, ते = तुमको, गवाम् = गायों का, सुभगे = हे सौभाग्यवती, अव भजाम = अलग हिस्सा देंगे।

अन्वय—(हे) सरमे, दैव्येन सहसा प्रबाधिता एव त्वं च आजगन्थ, त्वां स्वसारं कृणवै, पुनः मा गाः। (हे) सुभगे गवां ते अप भजाम।

हि० अ०—इस प्रकार, हे सरमा, अगर तुम देवताओं की शक्ति से पीड़ित की गई आई हो, तो हम तुम्हें बहन बनाते हैं, फिर मत जावो। हम, हे सौभाग्यवती, तुम्हें गायों का अलग हिस्सा देंगे।

***Trans.***—Thus, O Saramā, if you have come pressed by the power of gods we make you our sister, do not go back; O auspicious one, we give you a separate share of the kine

***Notes***—च—It is used in the sense of चेत्. आजगन्थ—See X. 108.7 : not unaccented because preceded by च in the sense of चेत् ( see accent on गच्छात् X. 108.3 ). प्रबाधिता—√*bādh* 'to oppress' + क्तः fem. sing.; for accent see पुरोहितम् (I 1. 1). कृणवै—√*kṛ* 'to make', pres. Ātm. subju. 1st. sing. ( in the collective sense ). गाः—√*gā* 'to go', root-aorist, subju. ( injun. in sense ), 2nd. sing. भजाम—√*bhaj* 'to divide', subju. 1st. plu.

नाहं वेद भ्रातृत्वं नो स्वसृत्व-
मिन्द्रो विदुरङ्गिरसश्च घोराः ।
गोकामा मे अच्छदयन्यदाय-
मपात इत पणयो वरीयः ॥१०॥

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् । इन्द्रः । विदुः । अङ्गिरसः । च । घोराः ॥ गोऽकामाः । मे । अच्छदयन् । यत् । आयम् । अप । अतः । इत । पणयः । वरीयः ॥१०॥

सा० भा०—सा तान् प्रत्याचष्टे । हे पणयः अहं भ्रातृत्व न वेद न जानामि । तथा स्वसृत्वं च नो वेद नैव जानामि । के जानन्ति तानाह । इन्द्रः घोराः शत्रूणां भयंकराः अङ्गिरसश्च विदुः जानन्ति । किंच अस्मात् स्थानादहं यत् यदा आयम् इन्द्रादीन प्राप्नवम् । 'अय पय गतौ' । लङि रूपम् । तदा मे मदीयाः गोकामाः युष्माभिरपहृता गाः कामयमाना इन्द्रादयः अच्छदयन् । युष्मदीयं स्थानमाच्छादयन्ति । 'छद अपवारणे' । अतः कारणाद् हे पणयः वरीयः उरुतरं गवां वृन्दं परित्यज्य अप इत अन्यत्स्थानं प्रति गच्छत । यद्वा । वरीयः प्रभूततमतिदूरं देशं गच्छत । इत । 'इण गतौ' । लोटि रूपम् । वरीयः उरुशब्दादीयसुनि 'प्रियस्थिर' इत्यादिना वरादेशः ।

शब्दाः—न = नहीं, अहम् = मैं, वेद = जानती हूँ, भ्रातृत्वम् = भाईपना, न = न तो, स्वसृत्वम् = बहनपना, इन्द्रः = इन्द्र, विदुः = जानते हैं, अङ्गिरसः = अङ्गिरस, च = और, घोराः = भयंकर, गोकामाः = गायों की इच्छा करनेवाले, मे=मुझको, अच्छदयन् = मालूम पड़े, यत् = जब, आयम् = आई, अप = अलग, अतः = इसलिये, इत = चले जावो, पणयः = हे पणियो, वरीयः = किसी विस्तृत स्थान पर ।

अन्वय—अहं भ्रातृत्वं न वेद; न स्वसृत्वम्; इन्द्रः घोराः अङ्गिरसश्च विदुः । यत् (अहम्) आयम्, (ते) मे गोकामाः अच्छदयन् । अतः (हे) पणयः, वरीयः अप इत ।

हि० अ०—मैं न तो भाईपना जानती हूँ, न बहनपना; इन्द्र तथा भयानक अङ्गिरस इसको जानते हैं। जब मैं आई, वे गायों की इच्छा करनेवाले

माल्म पड़े। अतः हे पणियो, ( इसको अपेक्षा ) किसी विस्तृत स्थान पर चले जावो।

*Trans.*—I know neither brotherhood nor sisterhood. Indra and terrible Aṅgirases know it. Thay seemed me cow-longing, when I departed. Therefore, O Paṇis, go away to a wider place ( than this. ).

*Notes*—वेद—See X. 108.4. विदुः—√*vid* 'to know perf. 3rd. plu. अच्छदयन्—√*chad* 'to seem', caus. impf. 3rd. plu. आयम्—√*i* 'to go', impf. 1st. sing.; not unaccented because preceded by यत्. अतः—Sāyaṇa followed by Griffith takes it to mean 'therefore', but Peterson as 'than this.' इत—√*i* 'to go', impv. 2nd. plu. वरीयः—Comparative degree of उरु which becomes वर् before the suffix ईयसुन्.

दूरमित पणयो वरीय उ-
द्गावो यन्तु मिनतीर्ऋतेन।
बृहस्पतिर्या अविन्दन्निगूळ्हाः
सोमो ग्रावाण ऋषयश्च विप्राः ॥११॥

दूरम्। इत। पणयः। वरीयः। उत्। गावः। यन्तु। मिनतीः। ऋतेन॥ बृहस्पतिः। याः। अविन्दत्। निऽगूळ्हाः। सोमः। ग्रावाणः। ऋषयः। च। विप्राः॥ ११॥

सा० भा०—हे पणयः यूयं वरीयः उरुतर दूरं दूरदेशम् इत गच्छत। युष्माभिरपहृताः गावः ऋतेन सत्येन मिनतीः मिनत्यो द्वारस्य पिधायकं पर्वतं हिंसत्यो विदारयन्त्यः उत् यन्तु तस्मादुद्गच्छन्तु। यद्वा। मिनतीः। व्यत्ययेन कर्मणि शतृ। मीयमाना युष्माभिर्बाध्यमानास्ता गावः सुब्व्यत्ययः। गा ऋतेन स्तुतिभिर्गन्तव्येनेन्द्रेण सहायेन बृहस्पत्यादय उन्नन्तु पर्वतादुद्गमयन्तु। निगूढाः नितरां स्थापिताः याः गाः बृहस्पति अविन्दत् लप्स्यते तथा सोमः तदभिषव-कारिणः ग्रावाणः च विप्राः मेधाविनः ऋषयः अङ्गिरसः च लप्स्यन्ते। 'विदॢ

लाभे'। तौदादिकः तस्मात् 'छन्दसि लुङ्लङ्लिटः' इति भविष्यदर्थे लङ्। 'शे मुचादीनाम्' इति नुमागमः ॥

शब्दा०—दूरम् = दूर, इतं = चले जावो, पणयः = हे पणियो, वरीयः = विस्तृत स्थान पर, गावः = गायें, उत् यन्तु = बाहर निकलें, मिनती = चट्टानों को तोड़ती हुईं, ऋतेन = सत्य नियम के अनुकूल, बृहस्पतिः = बृहस्पति ने, याः = जिनको, अविन्दत् = ढूढ़ निकाल है, निगूळ्हाः = छिपी हुई, सोमः = सोम ने, ग्रावाणः = पत्थरों ने, ऋषयः = ऋषियों ने, च = और, विप्राः = बुद्धिमान्।

अन्वय—( हे ) पणयः ( यूयं ) वरीयः दूरम् इत। गावः ऋतेन मिनतीः उत् यन्तु ; निगूळ्हाः याः ( गाः ) बृहस्पतिः अविन्दत् सोमः ग्रावाणः विप्राः ऋषयः च ( अविन्दन् )।

हि० अ०—हे पणियो, ( इसकी अपेक्षा ) किसी विस्तृत स्थान पर चले जावो। छिपी हुई गायें, जिनको बृहस्पति ने पता लगाया है, ( जिनको ) सोम ने, पत्थरों ने, तथा बुद्धिमान् ऋषियों ने ( पता लगाया है, चट्टानों के आवरण को ) तोड़ती हुईं, सत्य नियम के अनुकूल बाहर निकलें।

*Trans.*—O Paṇis, go to a wider place. Let the hidden cows, which Bṛhaspati has found, and Soma, stones, and the inspired seers ( have found ), emerge out, breaking ( the paving rocks ) according to the holy law.

*Notes*—यन्तु–√*i* 'to go', impv. 3rd. plu, मिनतीः—√*mī* 'to damage' + शतृ + ङीप्; nom. plu. This word has variously been interpreted. Grassmann renders it as 'changing place'; Geldner followed by Peterson as 'escaping'; Oldenberg proposes to read मिमती 'lowing'; Griffith in his translation adopts this sense अविन्दत्—√*vid* 'to find.' impf. 3rd. sing.; not unaccented because preceded by याः .. निगूळ्हाः—√*guh* 'to hide,' + क्त; for accent see VSB. p. 57 ( 6 ).

# HIRAṆYAGARBHA ( PRAJĀPATI )

'हिरण्यगर्भः' इति दशर्चं नवमं सूक्तं प्रजापतिपुत्रस्य हिरण्यगर्भाख्यस्यार्षं त्रैष्टुभम्। कशब्दाभिधेयः प्रजापतिर्देवता। तथा चानुक्रान्तम्—'हिरण्यगर्भो दश हिरण्यगर्भः प्राजापत्यः कायम्' इति। गतः सूक्तविनियोगः। प्राजापत्यस्य पशोर्वपापुरोडाशहविषां क्रमेणादितस्तिस्रोऽनुवाक्यास्ततस्तिस्रो याज्याः। सूत्रितं च—हिरण्यगर्भः समवर्तताग्र इति षट् प्राजापत्याः' (आश्व० श्रौ० ३.८) इति वरुणप्रघासेषु कायस्य हविषो हिरण्यगर्भ इत्येषा याज्या। सूत्रितं च—'कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्र इति प्रतिप्रस्थाता वाजिने तृतीयः' (आश्व० श्रौ० २.१७) इति॥

हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम॥ १॥

हिरण्यऽगर्भः। सम्। अवर्तत। अग्रे। भूतस्य। जातः। पतिः। एकः। आसीत्॥ सः। दाधार। पृथिवीम्। द्याम्। उत। इमाम्। कस्मै। देवाय। हविषा विधेम॥१॥

सा० भा०—हिरण्यगर्भः हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः। तथा च तैत्तिरीयकं—'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय' (तै० सं० ५.५.१.२) इति। यद्वा हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते। अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत। मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत। यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीनां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते। स च जातः जातमात्र एव एकः अद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिः ईश्वरः आसीत्। न केवलं पतिरासीदेव अपि तर्हि सः हिरण्यगर्भः

पृथिवीं विस्तीर्णां द्यां दिवम् उत अपि च इमाम् अस्माभिर्दृश्यमानां पुरोवर्तीनीमिमां भूमिम्। यद्वा। पृथिवीत्यन्तरिक्षनाम। अन्तरिक्षं दिवं भूमिं च दाधार धारयति। 'छन्दसि लुङ्लङ्लिटः' इति सार्वकालिको लिट्। तुजादित्वादभ्यासदीर्घः। कस्मै अत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते। यद्वा। सृष्ट्यर्थं कामयत इति कः। कमेर्डप्रत्ययः। यद्वा। कं सुखम्। तद्रूपत्वात् क इत्युच्यते। अथवा इन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं दायाहं कः कीदृशः स्यामित्युक्तवान्। स इन्द्रः प्रत्यूचे यदीदं ब्रवीष्यहं कः स्यामिति तदेव त्वं भवेति। अतः कारणात् क इति प्रजापतिराख्यायते। 'इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्' (ऐ० ब्रा० ३.२१) इत्यादिकं ब्राह्मणमत्रानुसंधेयम्। यदासौ किंशब्दस्तदा सर्वनामत्वात् स्मैभावः सिद्धः। यदा तु यौगिकस्तदा व्यत्ययेनेति द्रष्टव्यम्। 'सावेकाचः' इति प्राप्तस्य 'न गोश्वन्साववर्ण॰' इति प्रतिषेधः। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी। कं प्रजापतिं देवाय देवं दानादिगुणयुक्तम् हविषा प्राजापत्यस्य पशोर्वपारूपेणैककपालात्मकेन पुरोडाशेन वा विधेम वयमृत्विजः परिचरेम। विधतिः परिचरणकर्मा॥

शब्दाः—हिरण्यगर्भः = प्रजापति, समवर्तत = उत्पन्न हुआ, अग्रे = सर्वप्रथम, भूतस्य = प्राणियों का, जातः = उत्पन्न, पतिः = स्वामी, एकः = एक, आसीत् = था, सः = उसने, दाधार = धारण किया, पृथिवीम् = पृथिवी को, द्याम् = आकाश, उत = और, इमाम् = इन सबको, कस्मै = किस, देवाय = देवता का, हविषा = हवि से, विधेम = पूजन करें।

अन्वय—हिरण्यगर्भः अग्रे सम् अवर्तत। (सः) जातः भूतस्य एकः पतिः आसीत्। स इमां पृथिवीम् उत द्यां दाधार, (तं विहाय) कस्मै देवाय हविषा विधेम?

हि० अ०—हिरण्यगर्भ स० से प्रथम उत्पन्न हुआ; वह जन्म से ही उत्पन्न प्राणियों का अकेला स्वामी था। उसने पृथिवी, आकाश तथा इन सबको धारण किया। (उसको छोड़कर) किस देवता का हम हवि से पूजन करें?

***Trans***—Hiranyagarbha was produced in the beginning; he was the born sole lord of all beings. He held the earth, the sky and all these. What god (except him) should we worship with oblation?

***Notes***—हिरण्यगर्भः—According to the traditional view Hiranyagarbha is Prajāpati. Some take him to be sun-god.

'as the great power of the universe, from which all other powers and existences, divine and earthly are derived, a conception which is the nearest approach to the later mystical conception of Brahmā the creator of the world'—wallis. समवर्तत—सम् + √*vṛt* 'to turn', Ātm. impf. 3rd. sing. दाधार—√*dhṛ* 'to hold' perf. 3rd. sing.; the redpulicated syllable in दाधार is regularly lengthened. कस्मै—This word has been interpreted variously: Sāyaṇa following the tradition takes the word '*ka*' for Prajāpati. Scholars, generally, interpret it taking it as dative sing. of the pronominal stem किम्. Now the difficulty is, if the word '*ka*' is for Prajāpati it would certainly be a noun and accordingly it would be inflected like words terminating in अ. Thus the dative sing. of 'ka' would be काय like देवाय. Sāyaṇa's reply to this is that '*ka*' is conventional word for Prajāpati; but it is irregularly inflected like pronoun. विधेम—√*vidh* 'to worship' opt. 1st. plu.

य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑
उ॒पास॑ते प्र॒शिषं॒ यस्य॑ दे॒वाः ।
यस्य॑ छा॒यामृतं॒ यस्य॑ मृ॒त्युः
कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥२॥

यः । आ॒त्म॒ऽदाः । ब॒ल॒ऽदाः । यस्य॑ । विश्वे॑ । उ॒प॒ऽआस॑ते । प्र॒ऽशिष॑म् । यस्य॑ । दे॒वाः ॥ यस्य॑ । छा॒या । अ॒मृत॑म् । यस्य॑ । मृ॒त्युः । कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धे॒म ॥२॥

सा० भा०—यः प्रजापतिः आत्मदाः आत्मनां दाता । आत्मानो हि सर्वे तस्मात् परमात्मन उत्पद्यन्ते । यथाग्नेः सकाशाद्विस्फुलिङ्गा जायन्ते तद्वत् । यद्वा आत्मनां शोधयिता । 'दैप् शोधने' । 'आतो मनिन्' इति विच् । बलदाः बलस्य च दाता शोधयिता वा । यस्य च प्रशिषं प्रकृष्टं शासनमाज्ञां विश्वे

सर्वे प्राणिनः उपासते प्रार्थयन्ते सेवन्ते वा ; 'शासु अनुशिष्टौ'। 'शास इत्' (पा० सू० ६.४.३४) इत्युपधाया इत्वम्। 'शासिवसिघसीनां च' इति षत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। आसेरनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। 'तिङि चोदात्तवति' इति गतिरनुदात्ता तथा देवाः अपि यस्य प्रशासनमुपासते। अपि च अमृतम् अमृतत्वम्। भावप्रधानो निर्देशः। यद्वा। अमृतम्। मरणं नास्त्यस्मिन्नित्यमृतं सुधा। बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्। तदपि यस्य प्रजापतेः छाया छायेव वर्ति भवति। मृत्युः यमश्च प्राणापहारी छायेव भवति। तस्मै कस्मै देवाय इत्यादि समानं पूर्वेण हविषा पुरोडाशात्मनेति तु विशेषः॥

शब्दा०—यः = जो, आत्मदाः = प्राण देनेवाला, बलदाः = बल देनेवाला, यस्य = जिसकी, विश्वे = सम्पूर्ण, उपासते = मानते हैं, प्रशिषम् = आज्ञा, यस्य = जिसकी, देवाः = देवता, यस्य = जिसकी, छाया = प्रतिबिम्ब अमृतम् = अमृत, यस्य = जिसकी, मृत्युः = मृत्यु, कस्मै = किस, देवाय = देवता का, हविषा = हवि से, विधेम = पूजन करें।

अन्वय—यः आत्मदाः, बलदाः, यस्य प्रशिषं विश्वे, यस्य (प्रशिषं) देवाः उपासते; यस्य छाया अमृतं, यस्य (छाया) मृत्युः, (तं विहाय) कस्मै देवाय हविषा विधेम ?

हि० अ०—जो प्राण देनेवाला है, बल देनेवाला है, जिसकी आज्ञा सभी मानते हैं, जिसकी (आज्ञा) देवता (भी मानते हैं) जिसकी छाया अमृत है, जिसकी (छाया) मृत्यु (है), (उसको छोड़कर) किस देवता का हम हवि से पूजन करें ?

*Trans.*—Who is the giver of vital breath, giver of strength; whose commandment all obey, whose, even the gods; whose shadow is immortality, whose, the death. What god (except him) should we worship with oblation?

*Notes*—उपासते—√ *ās* with उप 'to worship' 'to obey' Ātm. pres. 3rd. plu. ; not unaccented because preceded by यस्य. प्रशिषम्—Derived from √ *śās* 'to preach'; the first syllable of the root has changed into इ (शास इत्—Pāṇ. VI. 4.34) and dental स् into cerebral ष् (शासिवसिघसीनां च—Pāṇ VII.3.60).

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः
कस्मै देवाय हविषा विधेम ॥ ३ ॥

यः । प्राणतः । निऽमिषतः । महिऽत्वा । एकः । इत् । राजा । जगतः । बभूव ॥ यः । ईशे । अस्य । द्विऽपदः । चतुःऽपदः । कस्मै । देवाय । हविषा विधेम ॥ ३ ॥

सा० भा०—यः हिरण्यगर्भः प्राणतः प्रश्वसतः । 'अन प्राणने' आदादिकः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । निमिषतः अक्षिपक्ष्मचलनं कुर्वतः । अत्रापि पूर्ववद्विभक्तिरुदात्ता । जगतः जङ्गमस्य प्राणिजातस्य महित्वा महत्त्वेन । 'सुपां सुलुक्' इति तृतीयाया आकारः । माहात्म्येन एक इत् अद्वितीय एव सन् राजा बभूव ईश्वरो भवति । भवतेर्णलि लिति' ( पा० सू० ६. १. १९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः चतुष्पदः गवाश्वादेश्च यः प्रजापतिः ईशे ईष्टे । 'ईश ऐश्वर्ये' । आदादिकोऽनुदात्तेत् । 'लोपस्त आत्मनेपदेषु' इति तलोपः । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । अस्य । 'ऊडिदम्' इतीदमो विभक्तिरुदात्ता । द्वौ पादौ यस्य स द्विपात् । 'संख्यासुपूर्वस्य' ( पा० सू० ५. ४. १४० ) इति पादस्यान्त्यलोपः समासान्तः । भसंज्ञायां 'पादः पत्' ( पा० सू० ६. ४. १३० ) इति पद्भाव द्वित्रिभ्यां पाद्दन्'० ( पा० सू० ६. २. १९७ ) इत्येकदेशविकृतस्यानन्यत्वादुत्तरपदान्तोदात्तत्वम् । स्वरवर्जमेषैव चतुष्पद इत्यत्रापि प्रक्रिया । 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरः । पूर्वपदस्य च 'नः संख्यायाः' ( फि० सू० २. ५ ) इत्याद्युदात्तत्वम् । 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् । ईदृशो यः प्रजापतिस्तस्मै कस्मै इत्यादि सुबोधं हविषा हृदयाद्यात्मनेत्ययमत्र विशेषः ॥

शब्दा०—यः = जो, प्राणतः = श्वांस लेनेवाले, निमिषतः = पलक मारनेवाले, महित्वा = महिमा से, एकः = अकेले, इत् = ही, राजा = शासक, जगतः = जंगम का, बभूव = हुआ है, यः = जो, ईशे = शासन करता है,

अस्य = इस, द्विपदः = दो पैरवाले का, चतुष्पदः = चार पैरवाले का, कस्मै = किस, देवाय = देवता का, हविषा = हवि से, विधेम = पूजन करें।

अन्वय—यः एकः इत् महित्वा प्राणतः निमिषतः जगतः राजा बभूव; यः अस्य द्विपदः चतुष्पदः ईशे; (तं विहाय) कस्मै देवाय हविषा विधेम ?

हि० अ०—जो अपनी महानता से श्वाँस लेनेवाले तथा पलक मारनेवाले जंगम (प्राणियों) का अकेला राजा हुआ है; जो इस दो पैरवाले तथा चार पैरवाले का शासन करता है; (उसको छोड़कर) किस देवता का हमलोग हवि से पूजन करें ?

*Trans.*—Who, through his grandeur, became the sole king of all the moving world that breathes and winks; who masters over these bipeds and quadrupeds. What god (except him) should we worship with oblation ?

*Notes*—प्राणतः—√*an* with प्र 'to breathe' + शतृ; gen. sing. निमिषतः—√*miṣ* with नि 'to wink' + शतृ; gen. sing.; words with the suffix शतृ accent the termination (शतुरनुमो नद्यजादी—Pāṇ. VI. 1.173). बभूव—√*bhū* 'to be,' perf. 3rd. sing.; not unaccented because syntactically connected with यः. ईशे—√*iś* 'to be master' pres. 3rd. sing.; त् has been dropped in the Ātm. (लोपस्त आत्मनेपदेषु—Pāṇ. VII. 1.41); not unaccented because preceded by यः. अस्य—Not unaccented because its substantive द्विपदः immediately follows in the same pāda. द्विपदः—The word पाद as the second member of the compd. loses its final syllable when preceded by any numeral or सु as the first member (संख्यासुपूर्वस्य—Pāṇ. V.4.140,) and again पाद् becomes पत् (पादः पत्—Pāṇ. VI. 4. 130); in the Bahuvrīhi compd. when the word पात् occurs as the second member, and numerals, two, three etc. as the first member, the second member is accented (द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ—Pāṇ VI. 2. 197). चतुष्पदः—Grammatical construction is the same as that of द्विपदः; but it is accented on the first member according to the original nature of Bahuvrīhi.

यस्येमे हिमवन्तो महित्वा
यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू
कस्मै देवाय हविषा विधेम ॥ ४ ॥

यस्य । इमे । हिमऽवन्तः । महिऽत्वा । यस्य । समुद्रम् । रसया । सह । आहुः ॥ यस्य । इमाः । प्रऽदिशः । यस्य । बाहू इति । कस्मै । देवाय । हविषा । विधेम ॥ ४ ॥

सा० भा०—हिमा अस्मिन् सन्तीति हिमवान् । तेन बहुवचनान्तेन सर्वे पर्वता लक्ष्यन्ते । यथा छत्रिणो गच्छन्तीति । हिमवन्तः हिमवदुपलक्षिताः इमे दृश्यमानाः सर्वे पर्वताः यस्य प्रजापतेः महित्वा महत्त्वं माहात्म्यमैश्वर्यमिति आहुः । तेन सृष्टत्वात्तद्रूपेणावस्थानाद्वा । तथा रसया । रसो जलम् तद्वती रसा नदी । अर्शआदित्वादच् । जातावेकवचनम् रसाभिर्नदीभिः सह समुद्रम् । पूर्ववदेकवचनम् । सर्वान् समुद्रान् यस्य महाभाग्यमिति आहुः कथयन्ति सृष्ट्यभिज्ञाः । यस्य च इमाः प्रदिशः प्राच्यारम्भा आग्नेयाद्याः कोणदिश ईशितव्याः । तथा बाहू । वचनव्यत्ययः । बाहवो भुजाः । भुजवत्प्राधान्ययुक्ताः प्रदिशश्च यस्य स्वभूताः । तस्मै कस्मै इत्यादि समानं पूर्वेण ॥

शब्दा०—यस्य = जिसकी, इमे = ये, हिमवन्तः = पर्वत, महित्वा = महिमा, यस्य = जिसकी, समुद्रम् = समुद्र को, रसया = रसा के, सह = साथ, आहुः = कहते हैं, यस्य = जिसकी, इमाः = ये, प्रदिशः = दिशायें, यस्य = जिसकी, बाहू = भुजायें, कस्मै = किस, देवाय = देवता का, हविषा = हवि से, विधेम = पूजन करें ।

अन्वय—यस्य महित्वा इमे हिमवन्तः, यस्य (महित्वा) रसया सह समुद्रम् आहुः; यस्य इमाः प्रदिशः यस्य बाहू, (तं विहाय) कस्मै देवाय हविषा विधेम ?

हि० अ०—जिसकी महिमा ये पर्वत, जिसकी (महिमा) रसा-सहित समुद्र, (ऐसा वे) कहते हैं; जिसकी ये दिशायें, जिसकी भुजायें (उपदिशायें) हैं, (उसको छोड़कर) किस देवता का हमलोग हवि से पूजन करें ?

*Trans.*—Whose grandeur the snowy mountains, whose the oceans with the Rasā (they) say; whose these quarters, whose the arms (mid-quarters). What god (except him.) should we worship with oblation?

*Notes*—आहुः—√*ah* 'to say' perf. 3rd. plu. ; not unaccented because preceded by यस्य.

येन द्यौरुग्रा पृथिवी च दृळ्हा
येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः
कस्मै देवाय हविषा विधेम ॥ ५ ॥

येन । द्यौः । उग्रा । पृथिवी । च । दृळ्हा । येन । स्वरिति स्वः । स्तभितम् । येन । नाकः ॥ यः । अन्तरिक्षे । रजसः । विऽमानः । कस्मै । देवाय । हविषा । विधेम ॥ ५ ॥

सा० भा०—येन प्रजापतिना द्यौः अन्तरिक्षम् उग्रा उद्‌गूर्णं विशेषा–गर्हनरूपं वा । पृथिवी भूमिः च दृळ्हा येन स्थिरीकृता । स्वः स्वर्गश्च येन स्तभितं स्तब्धं कृतम् । यथाधो न पतति तथोपरि अवस्थापितमित्यर्थः । 'ग्रसितस्कभित–स्तभित' इति निपात्यते । तथा नाकः आदित्यश्च येन अन्तरिक्षे स्तभितः । यः च अन्तरिक्षे रजसः उदकस्य विमानः निर्माता । तस्मै कस्मै इत्यादि गतम् ॥

शब्दा०—येन = जिससे, द्यौः = आकाश, उग्रा शक्तिशाली, पृथिवी = पृथिवी, च = और, दृळ्हा = स्थिर, येन = जिससे, स्वः = प्रकाशलोक, स्तभितम् = स्थिर रुका है, येन = जिसके द्वारा, नाकः = सूर्य, यः = जो, अन्तरिक्षे = अन्तरिक्ष में, रजसः = लोकों को, विमानः = नाप रहा है, कस्मै = किस, देवाय = देवता का, हविषा = हवि से, विधेम = पूजन करें ।

अन्वय—येन द्यौः उग्राः, येन पृथिवी च दृळ्हा, येन स्वः स्तभितम्, येन नाकः; यः अन्तरिक्षे रजसः विमानः । (तं विहाय) कस्मै देवाय हविषा विधेम ।

हि० अ०—जिसके द्वारा द्युलोक शक्तिशाली है, तथा पृथिवी स्थिर है; जिसके द्वारा प्रकाशलोक स्थिर रुका है, तथा जिसके द्वारा सूर्य (रुका है); जो,

अन्तरिक्ष में लोकों को नाप रहा है; (उसको छोड़कर) किस देवता का हमलोग हवि से पूजन करें ?

*Trans.*—By whom the sky is strong and earth is fixed fast ; by whom the region of light is propped, by whom the sun ; who in the mid-air is measuring the regions. What god ( except him ) should we worship with oblation ?

*Notes*—स्वः—Here visarga is rhotacised ; hence, इति in the pada-text. The accent which it bears is जात्यस्वरित which followed by इति undergoes kampa. Vide VSB. pp. 110. ( 4 ), 119 ( 3 ). स्तभितम्—√*stabh* 'to prop, past part. रजसः—'Water' ( Sāyaṇa ) 'regions' (Griffith). विमानः—√वि + *mā* 'to measure', root-aorist participle.

यं क्रन्दसी अवसा तस्तभाने
अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति
कस्मै देवाय हविषा विधेम ॥ ६ ॥

यम् । क्रन्दसी इति । अवसा । तस्तभाने इति । अभि । ऐक्षेताम् । मनसा । रेजमाने इति ॥ यत्र । अधि । सूरः । उत्ऽईतः विऽभाति । कस्मै । देवाय हविषा । विधेम ॥ ६ ॥

सा० भा०—क्रन्दितवान् रोदितवाननयोः. प्रजापतिरिति क्रन्दसी द्यावापृथिव्यौ । श्रूयते हि—'यदरोदीत्तदनयो रोदस्त्वम्' ( तै० ब्रा० २.२.९.४ ) इति । ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यं प्रजापतिं मनसा बुद्ध्या अभ्यैक्षेताम् आवयोर्महत्त्वमनेन इत्यभ्यपश्येताम् । 'ईक्ष दर्शने' । लङि अडादित्वादाद्युदात्तः । कीदृश्यौ द्यावापृथिव्यौ । रेजमाने राजमाने दीप्यमाने । आकारस्य व्यत्ययेनैत्वम् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वा । लिटः कानच् । 'फणां च सप्तानाम्' ( पा० सू० ६.४.१२५ ) इत्येत्वाभ्यासलोपौ । 'छन्दस्युभयथा' इति सार्वधातुकत्वाच्छप् । अत एव 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्यः उदितः उदयं प्राप्तः सन् विभाति प्रकाशते उत्पूर्वादेते

कर्मणि निष्ठा। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् तस्मै कस्मै इत्यादि सुज्ञानम् ॥

शब्दा०—यम् = जिसको, क्रन्दसी = आकाश तथा पृथिवी, अवसा = रक्षा के लिये, तस्तभाने = स्थिर किये गये, अभि ऐक्षेताम् = देखते हैं, मनसा = मन से, रेजमाने = चमकते हुये, यत्र = जहां, अधि = पर, सूरः = सूर्य, उदितः = निकला हुआ, विभाति = चमकता है, कस्मै = किस, देवाय = देवता का, हविषा = हवि से, विधेम = पूजन करें।

अन्वय—अवसा तस्तभाने क्रन्दसी रेजमाने मनसा यम् अभि ऐक्षेताम्; यत्र अधि उदितः सूरः विभाति; (तं विहाय) कस्मै देवाय हविषा विधेम?

हि० अ०—(प्राणियों की) रक्षा के लिये स्थिर किये गये आकाश तथा पृथिवी चमकते हुये, मन से जिसको देखते हैं; जहां पर उदित हुआ सूर्य चमकता है; (उसको छोड़कर) किस देव का हमलोग हवि से पूजन करें?

*Trans.*—Whom heaven and earth, propped (with a view) to protect (the beings), shining, look with their mind; whereupon the risen sun shines. What god (except him) should we worship with oblation?

*Notes*—तस्तभाने—√*stabh* 'to prop' + कानच्; nom. dual; final ए is Pragṛhya, hence, इति in the pada-text. अभ्यैक्षेताम्—अभि + √*īkṣ* 'to see', impf. 3rd. dual; not unaccented because syntactically connected with यम्. रेजमाने—√*rej* 'to tremble' + शानच्; nom. dual; final ए is Pragṛhya; hence, इति in the pada-text. Sāyaṇa takes रेजमाने as राजमाने. According to him, आ in राज has irregularly become ए and is accented. He also conjectures that originally it would be रराजमाने, the reduplicated syllable being dropped (फणां च सप्तानाम्—Paṇ. VI. 4. 125). The dropping of reduplicated syllable is being indicated by the change of आ into ए which being indication of reduplicated syllable is accented (अभ्यस्तानामादिः—Pāṇ. VI. 1. 189). उदितः—√*i* with उत् 'to rise', + क्त. विभाति—√*bhā* 'to shine', pres. 3rd. sing.; not unaccented because preceded by यत्र.

आपो ह यद् बृहतीर्विश्वमाय-
न्गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः
कस्मै देवाय हविषा विधेम ॥७॥

आपः । ह । यत् । बृहतीः । विश्वम् । आयन् । गर्भम् । दधानाः । जनयन्तीः । अग्निम् ॥ ततः । देवानाम् । सम् । अवर्तत । असुः । एकः । कस्मै । देवाय । हविषा । विधेम ॥७॥

सा० भा०—बृहतीः बृहत्यो महत्यः । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम् । अग्निम् । उपलक्षणमेतत् । अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्तीः जनयन्त्यः तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्यः आपो ह आप एव विश्वमायन् सर्वं जगत् व्याप्नुवन् यत् यस्मात् ततः तस्माद्धेतोः देवानां देवादीनां सर्वेषां प्राणिनाम् असुः प्राणभूतः एकः प्रजापतिः समवर्तत समजायत । यद्वा । यत् यं गर्भं दधाना आपो विश्वात्मनावस्थिताः ततो गर्भभूतात्प्रजापतेर्देवादीनां प्राणात्मको वायुरजायत । अथवा । यत् । लिङ्गवचनयोर्व्यत्ययः । उक्तलक्षणा या आपो विश्वमावृत्य स्थिताः ततस्ताभ्योऽद्भ्यः सकाशादेकोऽद्वितीयोऽसुः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम । तस्मै कस्मै इत्यादि गतम् ॥

शब्दा०—आपः = जलों ने, ह = निश्चित अर्थ का वाचक निपात, यत् = जिस, बृहतीः = महान्, विश्वम् = सम्पूर्ण लोक, आयन = व्याप्त किया था, गर्भम् = गर्भ, दधानाः = धारण करते हुये, जनयन्तीः = उत्पन्न करते हुये, अग्निम् = अग्नि को, ततः = उसी से, देवानाम् = देवताओं का, समवर्तत = उत्पन्न हुआ, असुः = प्राण, एकः = एकमात्र, कस्मै = किस, देवाय = देवता का, हविषा = हवि से, विधेम = पूजन करें ।

अन्वय—गर्भं दधानाः अग्निं जनयन्तीः बृहतीः आपः यत् विश्वम् आयन्, ततः देवानां एकः असुः सम् अवर्तत । कस्मै देवाय हविषा विधेम ।

हि० अ०—गर्भ धारण करते हुये तथा अग्नि ( आदि महाभूतों ) को उत्पन्न करते हुये जिन महान् जलों ने सम्पूर्ण लोक को व्याप्त किया था, उसी से

देवताओं का एकमात्र प्राण (—रूप वायु) उत्पन्न हुआ। (उसको छोड़कर) किस देवता का हमलोग हवि से पूजन करें?

*Trans.*—Great waters, which swept over the world bearing the germ and creating the fire (etc.); therefrom the sole breath of the gods was produced. What god (except him) should we worship with ablation?

*Notes*—बृहतीः—√*bṛṃh* 'to make big' + शतृ + ङीप्; here ङीप्, though it is पित्, is accented (बृहन्महतोरुपसंख्यानम्' Vārt. on Pāṇ. VI.I.173). आयंन्—√*i* 'to go' impf. 3rd. plu.; not unaccented because preceded by यत्. दधानाः—√*dhā* 'to put' + शानच्; accented on the first reduplicated syllable (अभ्यस्तानामादिः–Pāṇ. VII. 1. 189) जनयन्तीः–√*jan* 'to generate' + णिच् + शतृ + ङीप्. समवर्तत—See Ṛv. X 121.1

यश्चिदापो महिना पर्यपश्य-
दक्षं दधाना जनयन्तीर्यज्ञम्।
यो देवेष्वधि देव एक आसी-
त्कस्मै देवाय हविषा विधेम ॥ ८ ॥

यः। चित्। आपः। महिना। परिऽअपश्यत्। दक्षम्। दधानाः। जनयन्तीः। यज्ञम् ॥ यः। देवेषु। अधि। देवः। एकः। आसीत्। कस्मै। देवाय। हविषा। विधेम ॥ ८ ॥

सा० भा०—यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीः उत्पादयन्तीः तदर्थं दक्षं प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि दधानाः धारयित्रीः। दधातेर्हेतौ शानच्। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। ईदृशी आपः। व्यत्ययेन प्रथमा। अपः प्रलयकालीना महिना महिम्ना। छान्दसा मलोपः। स्वमाहात्म्येन यश्चित् यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान् यः च देवेष्वधि देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीयः आसीत् भवति। अस्तेश्छान्दसो लङ्। 'अस्तिसिचोऽपृक्ते' (पा० सू० ७. ३. ९६) इतीडागमः। तस्मै कस्मै इत्यादि गतम् ॥

शब्दा०—यः = जिसने, चित् = और, आपः = जलों को, महिना = महिमा से, परि अपश्यन् = चारों तरफ से देखा, दक्षम् = जनयित्री शक्ति को

धारण करनेवाले, जनयन्तीः = उत्पन्न करनेवाले, यज्ञम् = यज्ञ को, यः = जो, देवेषु = देवताओं के, अधि = ऊपर, देवः = देव, एकः = अकेला, आसीत् = था, कस्मै = किस, देवाय = देवता का, हविषा = हवि से, विधेम = पूजन करें।

अन्वय—यः महिना दक्षं दधानाः यज्ञं जनयन्तीः आपः चित् पर्यपश्यत्; यः देवेषु अधि एकः देवः आसीत्; (तं विहाय) कस्मै देवाय हविषा विधेम?

हि० अ०—जिसने अपनी महिमा से जनयित्री शक्ति को धारण करनेवाले, यज्ञ को उत्पन्न करनेवाले जलों को देखा; जो देवताओं के ऊपर एक देव था; (उसको छोड़कर) किस देवता का हमलोग हवि से पूजन करें?

*Trans.*—Who with his greateness saw over the waters bearing the productive force, producing the sacrifice; who was the sole God over all gods. What god (except him) hould we worship with oblation?

*Notes*—आपः–Irregular use of nom. plu. for acc. plu. अपः. पर्यपश्यत्—परि + $\sqrt{}$*pas* to see, impf. 3rd. sing.; not unaccented because preceded by यः; preposition is compounded and is unaccented.

मा नो हिंसीज्जनिता यः पृथिव्या
यो वा दिवं सत्यधर्मा जजान।
यश्चापश्चन्द्रा बृहतीर्जजान
कस्मै देवाय हविषा विधेम ॥ ९ ॥

मा। नः। हिंसीत्। जनिता। यः। पृथिव्याः। यः। वा। दिवम्। सत्यऽधर्मा। जजान ॥ यः। च। अपः। चन्द्राः। बृहतीः। जजान। कस्मै। देवाय। हविषा विधेम ॥ ९ ॥

सा० भा०—स प्रजापतिः नः अस्मान् मा हिंसीत् मा बाधताम्। यः पृथिव्याः भूमेः जनिता जनयिता स्रष्टा। 'जनिता मन्त्रे' इति णिलोपो निपात्यते।

उदात्तयणो हल्पूर्वात्' इति पृथिवीशब्दाद्विभक्तेरुदात्तत्वम्। यो वा यश्च सत्यधर्मा सत्यमवितथं धर्म जगतो धारणं यस्य स तादृशः प्रजापतिः दिवम् अन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास। 'जनी प्रादुर्भावे'। णिचि वृद्धौ 'जनीजॄष्क्नसुरञ्जः' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम्। ततो लिटि 'अमन्त्रे' (पा० सू० ३. १. ३५) इति निषेधादाम्प्रत्ययाभावे तिपो णलि वृद्धौ 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। यश्च बृहतीः महतीः चन्द्राः आह्लादिनीः अपः उदकानि जजान जनयामास। 'ऊडिदम्' इत्यादिना अप्शब्दादुत्तरस्य शस उदात्तत्वम्। तस्मै कस्मै इत्यादि गतम् ॥

शब्दा०—मा = मत, नः = हमलोगों को, हिंसीत् = कष्ट दे, जनिता = उत्पन्न करनेवाला, यः = जो, पृथिव्याः = पृथिवी को, यः = जो, वा = और दिवम् = आकाश को, सत्यधर्मा = सत्य नियमवाले, जजान = उत्पन्न किया, यः = जिसने, च = और, अपः = जलको, चन्द्रा. = आह्लादकारी, बृहतीः = महान्, जजान = उत्पन्न किया, कस्मै = किस, देवाय = देवता का, हविषा= हवि से, विधेम = पूजन करें।

अन्वय—यः पृथिव्याः जनिता, यः सत्यधर्मा दिवं वा जजान; यः च बृहतीः चन्द्राः अपः जजान; (तं विहाय) कस्मै देवाय हविषा विधेम?

हि० अ०—जो पृथिवी को उत्पन्न करनेवाला है, जो सत्य नियमवाला है, जिसने आकाश को उत्पन्न किया, जिसने आह्लादकारी महान् जलों को उत्पन्न किया, वह हमें कष्ट न दे। (उसको छोड़कर) किस देवता का हमलोग हवि से पूजन करे?

*Trans.*—May he not injure us, who is the begetter of the earth, he whose laws are true, who generated the heaven, and who generated the great and beautiful waters. What god (except him) should we worship with oblation?

*Notes*—हिं॒सी॒त्—√*hims* 'to injure', 'iṣ'-aorist, injun. 3rd. sing. ज॒नि॒ता—√*jan* 'to generate' with the suffix तृच्. स॒त्यध॑र्मा—Whose laws are true; Bahuvrīhi compd. accented on the first member. ज॒जान॑—√*jan* 'to generate', perf. 3rd. sing.; not unaccented because preceded by यः.

प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो
विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव।
यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु
व॒यं स्या॑म॒ पत॑यो र॒यीणा॑म् ॥ १० ॥

प्रजा॑पते। न। त्वत्। ए॒तानि॑। अ॒न्यः। विश्वा॑। जा॒तानि॑। परि॑। ता। ब॒भू॒व॒॥ यत्ऽका॑माः। ते॒। जु॒हु॒मः। तत्। नः॒। अ॒स्तु॒। व॒यम्। स्या॒म॒। पत॑यः। र॒यीणा॑म् ॥ १० ॥

सा० भा०—इळादधाख्य इष्ट्ययने प्राजापत्यस्य हविषः 'प्रजापते इत्येषानुवाक्या। सूत्रितं च—प्राजापत्य इळादधः प्रजापते न त्वदेतान्यन्यः' (आश्व० श्रौ० २. १४) इति। केशनखकीकीटादिभिः दुष्टानि हवींष्यनयैवाप्सु प्रक्षिपेत्। सूत्रितं च—'अपोऽभ्यवहरेयुः प्रजापते न त्वदेतान्यन्यः' (आश्व० श्रौ० ३. १०) इति। चौलादिकर्मस्वप्येषा होमार्था। सूत्रितं च—तेषां पुरस्तात्चतस्र आज्याहुतीर्जुहुयादग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च' (आश्व० गृ० १. ४. ४) इति।

हे प्रजापते त्वत् त्वत्तोऽन्यः कश्चित् एतानि इदानीम् वर्तमानानि विश्वा विश्वानि सर्वाणि। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। जातानि प्रथम विकारभाञ्जि ता तानि सर्वाणि भूतजातानि न परि बभूव न परिगृह्णाति। न व्याप्नोति। त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भावः। परिपूर्वो भवतिः परिग्रहार्थः। वयं च यत्कामाः यत्फलं कामयमानाः ते तुभ्यं जुहुमः हवींषि प्रयच्छामः तत् फलं नः अस्माकम् अस्तु भवतु तथा वयं च रयीणां धनानां पतयः ईश्वराः स्याम भवेम। 'नामन्यतरस्याम्' इति नाम उदात्तत्वम्।

शब्दा०—प्रजापते = हे प्रजापति, न = नहीं, त्वत् = तुमसे, एतानि = ये, अन्यः = भिन्न, विश्वा = सम्पूर्ण, जातानि = प्राणी, परि = चारों तरफ से व्याप्त करने वाले, ता = वे, बभूव = हो सकते, यत्कामाः = जिस इच्छा वाले, ते = तुमको, जुहुमः = स्तुति करते हैं, तत् = वह कामना, नः = हमारी, अस्तु = पूर्ण होवे, वयम् = हमलोग, स्याम = होवें, पतयः = स्वामी, रयीणाम् = धन के।

अन्वय—( हे ) प्रजापते त्वत् अन्यः एतानि विश्वा जातानि ता ( त्वा ) न परि बभूव । यत्कामाः ( वयं ) ते जुहुमः तत् नः अस्तु । वयं रयीणां पतयः स्याम ।

हि॰ अ॰—हे प्रजापति, तुमसे भिन्न ये जितने उत्पन्न जीव है, वे तुमको चारों तरफ से व्याप्त नहीं कर सकते; जिस कामना से हम तुम्हें हवि प्रदान करते हैं, वह हमारी इच्छा पूरी हो । हम धन के स्वामी बनें ।

*Trans.*—O Prajāpati all these created beings. beside thee, cannot surround thee. May that be of ours, seeking which we offer thee. May we be the lord of riches.

*Notes*—यत्कामाः—Desirous of which ; this type of compd. is called Syntactical compd. It is of the nature of Bahuvrīhi and is accented on the first member. जुहुमः—√*hu* 'to sacrifice.' pres. 1st. plu.; not unaccented beoause preceded by यत् . The first line has been interpreted variously 'Prajāpati, thou only comprehendest all these created things, and none beside thee' ( Griffith ). 'lord of every creature', thou rulest over all, and there is none beside thee. ( Peterson ).

# VĀK

'अहम्' इत्यष्टर्चं त्रयोदशं सूक्तम् । अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत् । अतः सर्षिः । सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता । तेन ह्येषा तादात्म्यमनुभवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं भवामीति स्वात्मानं स्तौति । द्वितीया जगती शिष्टाः सप्त त्रिष्टुभः । तथा चानुक्रान्तम्—'अहमष्टौ वागाम्भृणी तुष्टावात्मानं द्वितीया जगती' इति । गतो विनियोगः ॥

अहं रुद्रेभिर्वसुभिश्चरा-
म्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभ-
र्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

अहम् । रुद्रेभिः । वसुऽभिः । चरामि । अहम् । आदित्यैः । उत । विश्वऽदेवैः ॥ अहम् । मित्रावरुणा । उभा । बिभर्मि । अहम् । इन्द्राग्नी इति । अहम् । अश्विना । उभा ॥ १ ॥

सा० भा०—अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यद् ब्रह्म जगत्कारणं तद्रूपा [illegible] रुद्रेभिः रुद्रैरेकादशभिः । इत्थंभावे तृतीया । तदात्मना चरामि । एवं वसुभिः इत्यादौ तत्तदात्मना चरामीति योज्यम् । तथा ब्रह्मीभूता बिभर्मि धारयामि । इन्द्राग्नी अपि अहम् एव धारयामि । उभा उभौ अश्विना अश्विनावपि अहम् एव धारयामि । मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सद् दृश्यते । माया च जगदाकारेण विवर्तते । तादृश्या मायया आधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योत्पत्तिः ॥

शब्दा :—अहम् = मैं, रुद्रेभिः = रुद्रों के साथ, वसुभिः = वसुओं के साथ, चरामि = विचरण करती हूँ, अहम = मैं, आदित्यैः = आदित्यों के साथ, उत = और, विश्वदेवैः = विश्वदेवों के साथ, अहम् = मैं, मित्रावरुणा = मित्र और वरुण को उभा = दोनों को, बिभर्मि = धारण करती हूँ, अहम् = मैं,

इन्द्राग्नी = इन्द्र और अग्नि को, अहम् = मैं, अश्विना = अश्विनीकुमारों को, उभा = दोनों को।

अन्वय—अहं रुद्रेभिः वसुभिः चरामि; अहम् आदित्यैः उत विश्वदेवैः ( चरामि ); अहं उभा मित्रावरुणा बिभर्मि; अहम् इन्द्राग्नी, अहम् उभा अश्विना ( बिभर्मि )।

हि० अ०—मैं रुद्रों और वसुओं के साथ विचरण करती हूँ; मैं आदित्यों और विश्वदेवों के साथ विचरण करती हूँ; मैं इन्द्र और अग्नि को तथा मैं दोनों अश्विनीकुमारों को ( धारण करती हूँ )।

*Trans.*—I travel with the Rudras ( i e. Maruts ) and the Vasus ; I ( travel ) with the Ādityas and the Viśvedevas. I hold both Mitra and Varuṇa ; I ( hold ) Indra and Agni; I ( hold ) both the Aśvins.

*Notes*—अहम्—The speaker of this hymn is Vāk, the personified speech. In this soliloquy Vāk represents herself as the vital spirit of the universe. Wallis observes : 'Vāk 'Speech' is celebrated alone in two whole hymns, X.71 and X.125, of which the former shows that the primary application of the name was to the voice of the hymn, the means of communication between heaven and earth at the sacrifice. The other hymn illustrates the constant assimilation of the varied phenomena of nature to the sacrifice; all that has a voice in nature, the thunder of the storm, the reawaking of life at dawn with songs of rejoicing over the new birth of the world, are embodied in this Vāk in the same way as it is said of Bṛhaspati that he embraces all things that are. It is thus another expression for that idea of the unity of the world, which we have seen crowning the mystical speculations of all the more abstract hymns of the collection' ( *Comology of the Ṛgveda*, p. 85 ). चरामि—√ *car* 'to walk', pres. 1st sing. बिभर्मि—√ *bhṛ* 'to support' pres. 1st sing. मित्रावरुणा, उभा, अश्विना—In the Classical

Sanskrit words ending in अ have औट् (औ) termination in nom. and acc. dual. However, in Vedic language आट् (आ) is more frequent than औट् (औ) (सुपां सुलुक्॰—Pāṇ VII 1.39). रुद्रेभिः—Words ending in अ have ऐस् termination in instr. plu. However, in Vedic language भिस् is more frequent than ऐस् (बहुलं छन्दसि—Pāṇ. VII. 1.10). इन्द्राग्नी—Final ई is Pragṛhya ; hence, इति in the pada-text (ईदूदेद्द्विवचनं प्रगृह्यम्—Pāṇ. I 1.11.).

अहं सोममाहनसं बिभ-
र्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते
सुप्राव्ये यजमानाय सुन्वते ॥ २ ॥

अहम् । सोमम् । आहनसम् । बिभर्मि । अहम् । त्वष्टारम् । उत । पूषणम् । भगम् । अहम् । दधामि । द्रविणम् । हविष्मते । सुप्रऽअव्ये । यजमानाय । सुन्वते ॥ २ ॥

सा० भा०—आहनसम् आहन्तव्यमभिपोतव्यं सोमं यद्वा शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोमम् अहम् एव बिभर्मि । तथा हविष्मते । हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविर्देवानां प्रापयित्रे तर्पयित्रे । अवतेस्तर्पणार्थात् 'अवितॄस्तृतन्त्रिभ्यः ईः' (उ. सू. ३. १५८) इतीकारप्रत्ययः । चतुर्थ्येकवचने यणि उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति सुपः स्वरितत्वम् ॥ सुन्वते सोमाभिषवं कुर्वते ॥ 'शतुरनुमः' इति चतुर्थ्या उदात्तत्वम् ॥ ईदृशाय यजमानाय द्रविणं धनं यागफलरूपम् अहम् एव दधामि धारयामि । एतच्च ब्रह्मणः फलदातृत्वं 'फलमत उपपत्तेः' (वे. सू. ३. २. ३८) इत्यधिकरणे भगवता भाष्यकारेण समर्थितम् ॥

शब्दा०—अहम् = मैं, सोमम् = सोम को, आहनसम् = अभिषव किये जाने वाले, अथवा शत्रुओं को नष्ट करनेवाले, बिभर्मि = धारण करती हूं, अहम् = मैं, त्वष्टारम् = त्वष्टा को, उत = और, पूषणम् = पूषा को, भगम् = भग को, अहम् = मैं, दधामि = धारण करती हूं, द्रविणम् = धन को,

हविष्मते = हवि से युक्त, सुप्राव्ये = शोभन हवि को देवताओं तक पहुंचाने वाले, यजमानाय = यजमान के लिये, सुन्वते = सोमाभिषव करनेवाले।

अन्वय—अहम् आहनसं सोमं बिभर्मि; अहं त्वष्टारम् उत पूषणं भगम् (बिभर्मि) अहं हविष्मते सुप्राव्ये सुन्वते यजमानाय द्रविणं दधामि।

हि० अ०—मैं (यज्ञ में) अभिषव किये जानेवाले सोम को धारण करती हूँ; मैं त्वष्टा, पूषा और भग को (धारण करती हूँ)। मैं हवियुक्त, शोभन हवि को (देवताओं तक) पहुँचानेवाले तथा सोमाभिषव करनेवाले यजमान के लिये धन धारण करती हूँ।

*Trans.*—I cherish the Soma to be pressed out: I (hold) Tvaṣṭar, Pūṣan and Bhaga. I load with wealth the sacrificer who offers oblations, leads oblations to gods and presses Soma.

*Notes*—आहनसम्—This word has variously been interpreted by the commentators. Yāska derives it from आ + √*han* 'to utter' and accordingly explains by 'आहननवन्तो वचनवन्तः' (Nir. IV. 15). Sāyaṇa takes it primarily to mean 'to be killed' (आहन्तव्यम्) and secondarily 'to be pressed' (अभिषोतव्यम्). Taking Soma as a divine being, he takes आहनसम् also to mean 'killer of enemies' (शत्रूणामाहन्तारम्) Peterson explains it by 'stream' and Griffith by 'high swelling'. Grammatically आहनसम् is a compd. word, but it is not analysed in the pada-text, because हनस is not used as a word independently. बिभर्मि—√*bhṛ* to 'support' pres. 1st. sing. दधामि—√*dhā* 'to put', pres. 1st. sing. हविष्मते—Dative sing. of the stem हविष्मत् from हविष् (√*hu* 'to sacrifice' + इस्) + मतुप्. सुप्राव्ये—Dative sing. of सुप्रावी from सु + प्र + √*av* 'to protect' + ई. सुप्रावी bears the Udātta accent on the final syllable ई. When this Udātta ई is coalesced with the declensional suffix ए, which is always Anudātta, the resulting accent is Svarita which is called क्षैप्रस्वरित. But the

Prātiśākhyas take this Svarita as जात्य स्वरित because, according to them, it is independently found in a pada, while क्षैप्रस्वरित being always found in the euphonic combination of two seperate padas ( cf. उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य—Pāṇ. VI. 1.163 ); for Kampa see क्वे३ दानीम् ( Ṛv. I. 35.7 ). 'Pious' ( Peterson ). 'Zealous' ( Griffith ). सुन्वते—Dative sing. of सुन्वत् from √*su* 'to press Soma' with the suffix शतृ.

अहं राष्ट्री संगमनी वसूनां
चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा
भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । चिकितुषी । प्रथमा । यज्ञियानाम् । ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा । भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥ ३ ॥

सा० भा०—अहं राष्ट्री । ईश्वरनामैतत् । सर्वस्य जगत ईश्वरी । तथा वसूनां धनानां संगमनी संगमयित्र्युपासकानां प्रापयित्री । चिकितुषी यत्साक्षात्कर्तव्यं परं ब्रह्म तज्ज्ञातवती स्वात्मतया साक्षात्कृतवती । अत एव यज्ञियानां यज्ञार्हाणां प्रथमा मुख्या । या एवं गुणविशिष्टाहं तां मां भूरिस्थात्रां बहुभावेन प्रपञ्चात्मनावतिष्ठमानां भूरि भूरीणि बहूनि भूतजातानि आवेशयन्तीं जीवभावेनात्मानं प्रवेशयन्तीमीदृशीं मां पुरुत्रा बहुषु देशेषु व्यदधुः देवाः विदधति कुर्वन्ति । उक्तप्रकारेण वैश्वरूप्येणावस्थानात् । यद्यत्कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः ॥

शब्दा०—अहम् = मैं, राष्ट्री = सम्पूर्ण जगत की शासिका, संगमनी = प्राप्त करानेवाली, वसूनाम् = धनों को, चिकितुषी = जानने वाली, प्रथमा = सर्वप्रथम, यज्ञियानाम् = पूजनीय देवताओं में, ताम् = उस, मा = मुझको, देवाः = देवों ने, वि अदधुः = विभिन्न प्रकार से धारण किया है, पुरुत्रा = अनेक स्थानों पर, भूरिस्थात्राम् = अनेक रूपों में अवस्थित, भूरि = बहुतों में, आवेशयन्तीम् = प्रवेश करने वाली ।

अन्वय—अहं राष्ट्री, वसूनां संगमनी, चिकितुषी, यज्ञियानां प्रथमा (अस्मि)। तां भूरिस्थात्रां भूरि आवेशयन्तीं मा देवाः पुरुत्रा वि अदधुः।

हि० अ०—मैं सम्पूर्ण जगत की शासिका, धनों को प्राप्त कराने वाली, सबको जानने वाली तथा पूजनीयों (देवों) में प्रमुख हूँ। अनेक रूपों में अवस्थित तथा बहुतों में प्रवेश करनेवाली उस मुझको देवों ने अनेक स्थानों पर विविध प्रकार से धारण किया है।

*Trans.*—I am the Queen, the gatherer-up of riches, the knower and the first among the worshipables. The gods have put me abiding in many places and entering everywhere in many, at many place:

*Notes*—राष्ट्री—√*rāj* 'to rule' + ष्ट्रन् + ङीष्. It is enumerated in the list of the names of ईश्वर (Nigh. II. 22. 1). संगमनी—सम् + √*gam* 'to go together' with the suffixes ल्युट् and ङीप्. चिकितुषी—√*cit* 'to know' + क्वसु + ङीप्; nom. sing. व has changed into उ by samprasāraṇa. Roth, Grassmann, Ludwig and Peterson construe it with प्रथमा यज्ञियानाम् and accordingly translate 'the first to know the holy ones (i. e. gods)'. Griffith following Sāyaṇa takes चिकितुषी and प्रथमा यज्ञियानाम् separately and explains by 'most thoughtful' and 'first of those who merit worship' respectively. अदधुः—√*dhā* 'to put' impf. 3rd plu. पुरुत्रा—See पुरुषत्रा (Ṛv. IV. 12. 4). भूरिस्थात्राम्—भूरि + √*sthā* 'to stand' + त्रल् + टाप्; Bahuvrihi compd. accented on the first member. आवेशयन्तीम्—√*viś* 'to enter' णिच् + शतृ + ङीप्; acc. sing. भूरि—Adverb; from √*bhū* 'to be' with the suffix क्रिन्. The suffix being नित् it accents the first syllable.

मया सो अन्नमत्ति यो विपश्यति
यः प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उपक्षियन्ति
श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥

मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति । यः । प्राणिति । यः । ईम् । शृणोति । उक्तम् । अमन्तवः । माम् । ते । उप । क्षियन्ति । श्रुधि । श्रुत । श्रद्धिऽवम् । ते । वदामि ॥ ४ ॥

सा० भा०—यः अन्नमत्ति सः भोक्तृशक्तिरूपया मया एवान्नमत्ति । यः च विपश्यति । आलोकयतीत्यर्थः । यः च प्राणिति श्वासोच्छ्वासरूपं व्यापारं करोति सोऽपि मयैव । यश्च उक्तं शृणोति ॥ 'श्रु श्रवणे' । 'श्रुवः शृ च' इति श्नुप्रत्ययः । धातोः शृभावः ॥ य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते अमन्तवः अमन्यमाना अजानन्तः उप क्षियन्ति । उपक्षीणाः संसारेण हीना भवन्ति ॥ मनेरौणादिकस्तुप्रत्ययः । नञ्समासे व्यत्ययेनान्तोदात्तत्वम् । यद्वा । भावे तुप्रत्ययः । ततो बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । माममन्तवो मद्विषयज्ञान- रहिता इत्यर्थः ॥ श्रुत विश्रुत सखे श्रुधि । मया वक्ष्यमाणं शृणु ॥ छान्दसो विकरणस्य लुक् । 'श्रुशृणुपृकृवृभ्यः०' इति हेर्धिभावः ॥ किं तच्छ्रोतव्यम् ॥ श्रद्धिवम् । श्रद्धिः श्रद्धा । तया युक्तम् । श्रद्धायत्नेन लभ्यमित्यर्थः । श्रदन्तरो- रुपसर्गवद्वृत्तिरिष्यते ( पा० सू० १.४.५७.२ ) इति श्रद्धाशब्दस्योपसर्गवद्वर्तमान- त्वात् 'उपसर्गे घोः किः' इति किप्रत्ययः । मत्वर्थीयो वः । ईदृशंब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि ॥

शब्दा०—मया = मेरे द्वारा, सः = वह, अन्नम् = अन्न, अत्ति = खाता है, यः = जो, विपश्यति = देखता है, यः = जो, प्राणिति = सांस लेता है, यः = जो, ईम् = उसको, शृणोति = सुनता है, उक्तम् = कही गई बात को, अमन्तवः = न जानने वाले, ते = वे, उप = समीप, क्षियन्ति = निवास करते हैं, श्रुधि = सुनो, श्रुत = हे सुननेवाले, श्रद्धिवम् = श्रद्धायुक्त, ते = तुम्हारे लिये, वदामि = कहती हूँ ।

अन्वय—यः विपश्यति, यः प्राणिति, यः ईम् उक्तं शृणोति सः मया अन्नम् अत्ति । अमन्तवः ते माम् उप क्षियन्ति । हे श्रुत, श्रुधि; ते श्रद्धिवं वदामि ।

हि० अ०—जो देखता है, जो सांस लेता है, जो कही बात को सुनता है; वह मेरे द्वारा खाता है । ( यद्यपि ) इसको नहीं जानते हैं, ( फिर भी ) वे मेरे पास निवास करते हैं । हे सुननेवाले, सुनो; तुम्हारे लिये श्रद्धा के योग्य (बात) कहती हूँ ।

*Trans.*—He, who sees, who breathes and who hears the word outspoken, eats food through me. They know it not, but yet they dwell beside me. Hear, O hearer, I speak the truth for you.

*Notes*—अत्ति—√*ad* 'to eat' pres. 3rd. sing. विपश्यति—√*paś* 'to see' pres. 3rd. sing. accented because preceded by यः. प्राणिति—प्र + √*an* 'to breathe' pres. 3rd. sing. ; accented because preceded by यः. श्रृणोति—√*śru* 'to hear' pres 3rd. sing. accented because preceded by यः. There is a controversy regarding the construction of the sub-clauses in the first hemistich. Sāyaṇa conjectures a sub-ordinate clause 'यो अन्नमत्ति' to 'मया सो अन्नमत्ति' and principal clauses 'सः मया विपश्यति,' 'सः मया प्राणिति' and 'सः मया श्रृणोति' to 'यो विपश्यति,' 'यः प्राणिति' and 'य ईं श्रृणोत्युक्तम्' respectively. Peterson seems to be right when he takes 'मया सो अन्नमत्ति' as a principal clause and remaining clauses as subordinate to it. In his notes he writes : 'All the authors follow Sāyaṇa and make no distinction betwen the relative clauses and the first clause 'सो अन्नमत्ति'. But is not the meaning that all that see and breathe and hear, that is the whole living world draw their food from the divine Word ?' Griffith, too, follows Peterson's interpretation. He translates : 'Through me alone all eat the food that feeds them, each man who sees, breathes, hears the word outspoken' अमन्तवः—नञ् + √*man* 'to think' with the suffix तु; nom. plu. Bahuvrihi compd. accented on the final syllable ( नञ्सुभ्याम्—Pān. VI. 2. 192 ). Sāyaṇa construes it with माम् and accordingly explains as 'those who do not know of me ( मां न जानन्ति ते अमन्तवः ) or 'those who have no knowledge of me' ( माममन्तवो मद्विषयज्ञानरहिता इत्यर्थः ). उप क्षियन्ति—उप + √*kṣi* 'to destroy' pres. 3rd. plu ; Griffith and Peterson, however, take here this root to mean 'to dwell :

Griffith explains the 3rd pāda as 'they know it not, but yet they dwell beside me'. Sāyaṇa following the sense of the root explains it by 'those who have no knowledge of me become bereft of this world (उप क्षियन्ति उपक्षीणाः संसारेण हीना भवन्ति ). श्रुधि— √ *śru* to 'hear' root-aorist, impv. 2nd sing.; accented because beginning of the pāda. श्रुत— √ śru 'to hear' + क्त; Voc. sing. ; in his translation Ludwig, following Roth and Grassmann, takes it as impv. 2nd plu. However, in his commentory he takes श्रुतश्रद्धिवम् as one word. But he is evidently wrong. श्रुत cannot bo impv. 2nd. sing. because it is unaccented. Had it been a verb it must have been accented ( cf. तिङ्ङतिङः—Pān. VIII. 1.28 ) because it is preceded by a verb. To take 'श्रुतश्रद्धिवम्' as one word is against the pada-text, श्रद्धिवम्—According to the Vārtika श्रत् is regarded as an upasarga ( श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यते—( Vār. on Pāṇ I. 5. 57 ) and by adding the suffix कि to it ( उपसर्गे घो किः—Pāṇ. III. 3. 12 ) we have the word श्रद्धि which is identical to श्रद्धा. Again by adding the suffix व in the sense of वतुप् we have the word श्रद्धिव meaning worthy of faith'. वदामि— √ *vad* 'to speak' pres. 1st. sing.

अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तंतमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥

अहम् । एव । स्वयम् । इदम् । वदामि । जुष्टम् । देवेभिः । उत । मानुषेभिः । यम् । कामये । तम्ऽतम् । उग्रम् । कृणोमि । तम् । ब्रह्माणम् । तम् । ऋषिम् । तम् । सुऽमेधाम् ॥ ५ ॥

सा० भा०—अहं स्वयम् एव इदं वस्तु ब्रह्मात्मकं वदामि उपदिशामि। देवेभिः देवैरिन्द्रादिभिरपि जुष्टं सेवितम्। उत अपि च मानुषेभिः मनुष्यैरपि जुष्टम्। ईदृग्वस्त्वात्मिकाहं यं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तं तं पुरुषम् उग्रं कृणोमि। सर्वेभ्योऽधिकं करोमि। तमेव ब्रह्माणं स्रष्टारं करोमि तमेव ऋषिमतीन्द्रियार्थदर्शिनं करोमि तम् एव सुमेधां शोभनप्रज्ञं च करोमि॥

शब्दा—अहम् = मैं, एव = ही, स्वयम् = स्वयं, इदम् = इस बात को, वदामि = कहती हूँ, जुष्टम् = प्रिय, अभीष्ट, देवेभिः = देवताओं द्वारा, उत = और, मानुषेभिः = मनुष्यों द्वारा, यत् = जिसको, कामये = चाहती हूँ, तंतम् = उस-उसको, उग्रम् = प्रचण्ड, कृणोमि = करती हूँ, तम् = उसको, ब्रह्माणम् = सबसे बड़ा, तम् = उसको, ऋषिम् = मन्त्रद्रष्टा, तम् = उसको, सुमेधाम् = सुन्दर प्रज्ञावाला।

अन्वय—अहम् एव स्वयं देवेभिः उत मानुषेभिः जुष्टम् इदं वदामि। यत् कामये तंतम् उग्रं कृणोमि, तं ब्रह्माणं, तम् ऋषिं, तं सुमेधाम् ( कृणोमि )।

हि० अ०—मैं स्वयं ही देवताओं तथा मनुष्यों द्वारा अभीष्ट इस ( बात ) को कहती हूँ। जिसको चाहती हूँ उस-उसको प्रचण्ड बनाती हूँ, उसको ब्रह्मा ( बनाती हूँ ), उसको मन्त्रदष्टा ( बनाती हूँ ), उसको सुन्दर प्रज्ञावाला ( बनाती हूँ )।

*Trans*:—Verily I myself speak it that is dear to gods and men. Whomever I love, I make him strong. ( I make ) him a Brahman, ( I make ) him a seer ( I make ) him a wiseman.

*Notes*:—व॒दा॒मि—See Ṛv. X. 125. 4 जुष्टम—√ *Juṣ* 'to enjoy' + क्त It has option to accent the first syllable or the second ( जुष्टार्पिते च छन्दसि—Pāṇ. VI. 1.209 ). का॒मये॑—√*kam* 'to love' caus. pres. Ātm. 1st. sing., not unaccented because preceded by यत्. तंतम्—Iterative compd. accented on the first member. कृ॒णो॒मि॒—√ *kṛ* 'to make', pres 1st. sing. ब्र॒ह्माणम्—Sāyana here takes ब्रह्माणम् to mean 'creator'. Muir observes ; 'This' would seem to prove that somtimes at least the Brahman was such not by birth or nature, but by special favour and inspiration of the goddess. In this passage,

therefore, the word cannot denote the member of a caste, who would not be dependent on the good will of Vāk for his position. (O. S. T., vol. I, p. 246) The word ब्रह्माणंम् has the Udātta accent on the suffix, therefore it would mean here the 'creator of hymns'. The word ब्रह्मन्, when accents the root, means 'prayer'. सुमेधाम्—Bahuvrihi compd. accented on the final syllable of the second member.

अहं रुद्राय धनुरा तनोमि
ब्रह्मद्विषे शरवे हन्तवा उं।
अहं जनाय समदं कृणो-
म्यहं द्यावापृथिवी आ विवेश ॥ ६ ॥

अहम्। रुद्राय। धनुः। आ। तनोमि। ब्रह्मऽद्विषे। शरवे। हन्तवै। ऊँ इति। अहम्। जनाय। सऽमदम्। कृणोमि। अहम्। द्यावापृथिवी इति। आ। विवेश ॥ ६ ॥

सा० भा०—पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य। षष्ठयर्थे चतुर्थी। महादेवस्य धनुः चापम् अहम् आ तनोमि। ज्ययाततं करोमि। किमर्थम्। ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं हन्तवै हन्तुं हिंसितुम् ॥ हन्तेः 'तुमर्थे सेसेन्०' (पा० सू० ३.४.९) इति तवैप्रत्ययः। 'अन्तश्च तवै युगपत्' (पा० सू० ६.१.२००) इत्याद्यन्तयोर्युगपदुदात्तत्वम् 'शृ हिंसायाम्' इत्यस्मात् 'शृस्वृस्निहि०' इत्यादिना उप्रत्ययः। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥ उशब्दः पूरकः। अहम् एव समदम्। समानं माद्यन्त्यस्मिन्निति समत्संग्रामः। स्तोतृजनार्थे शत्रुभिः सह संग्राममहमेव कृणोमि करोमि। तथा द्यावापृथिवी दिवं च पृथिवीं चान्तर्यामितया अहम् एव आ विवेश प्रविष्टवती ॥

शब्दा०—अहम् = मैं, रुद्राय = रुद्र के लिये, धनुः = धनुष, आतनोमिः = विस्तारित करती हूँ, ब्रह्मद्विषे = स्तुतियों से द्वेष करनेवाले के लिये, शरवे = वाण के लिये, हन्तवै = मारने के लिये, उ = निपात, अहम् = मैं, जनाय = स्तोतृजन के लिये, समदम् = युद्ध, कृणोमि = करती

हूँ, अहम्=मैं, द्यावापृथिवी=आकाश से लेकर पृथिवी तक सर्वत्र, आ विवेश=प्रविष्ट अर्थात् व्याप्त हूँ।

अन्वय—अहं ब्रह्मद्विषे हन्तवै रुद्राय शरवे धनुः आ तनोमि। अहं जनाय समदं कृणोमि; अहं द्यावापृथिवी आ विवेश।

हि० अ०—स्तुतियों से द्वेष करनेवाले को मारने के लिये मैं रुद्र के बाण के लिये उसके धनुष को विस्तारित करती हूँ। मैं (अपने) स्तोतृ जन के लिये संग्राम करती हूँ; मैं आकाश से लेकर पृथिवी पर्यन्त सर्वत्र व्याप्त हूँ।

*Trans.*—I bend the bow for Rudra to make his arrow kill the hater of prayers. I make battle for the (worshipping) man. I pervade heaven and earth.

*Notes*—तनोमि—√*tan* 'to stretch', pres. 1st. sing. ब्रह्मद्विषे—ब्रह्म+√*dviṣ* 'to hate'+क्विप्. Upapada compd. accented on the second member (गतिकारकोपपदात्कृत्—Pāṇ. VI. I. 139). शरवे—Dative sing of शरु from √*śṛ*. 'to kill' with the suffix उ. Sāyaṇa here takes it to mean a demon resident of Tripura (हिंसकं त्रिपुरनिवासिनमसुरम्). Here Sāyaṇa's interpretation of the word is not happy. Here it should be taken to mean weapon especially arrow as Sāyaṇa himself has elsewhere explained. हन्तवै—Dative infinitive from √*han* 'to kill'+तवै; words ending in तवै accents the root as well as the suffix (अन्तश्च तवै युगपत्—Pāṇ. VI. 1.200). उ—In the pada-text उ is treated as Pragṛhya. Before इति it is lengthened and nasalized. It is always unaccented. कृणोमि—See Ṛv. X. 125.5. द्यावापृथिवी—See notes on I. 35. 9. विवेश—√*viś* 'to enter' perf. 1st. sing.

अहं सुवे पितरमस्य मूर्ध-
न्मम योनिरप्स्व१न्तः समुद्रे।
ततो वि तिष्ठे भुवनानु वि-
श्वोतामूं द्यां वर्ष्मणोप स्पृशामि॥ ७॥

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अन्तः । समुद्रे । ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥ ७ ॥

सा० भा०—'द्यौः पिता' ( तै० ब्रा० ३.७.५.४ ) इति श्रुतेः पिता द्यौः । पितरं दिवम् अहं सुवे प्रसुवे जनयामि । 'आत्मन आकाशः संभूतः' ( तै० आ० ८.१ ) इति श्रुतेः । कुत्रेति तदाह । अस्य परमात्मनः मूर्धन् मूर्धन्युपरि । कारणभूते तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव । मम च योनिः कारणं समुद्रे । समुद्द्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा । तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद्ब्रह्म चैतन्यं तन्मम कारणमित्यर्थः । यत ईदृग्भूता अहमस्मि ततः हेतोः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनु प्रविश्य वि तिष्ठे विविधं व्याप्य तिष्ठामि ॥ 'समवप्रविभ्यः स्थः' ( पा० सू० १.३.२२ ) इत्यात्मनेपदम् ॥ उत अपि च अमूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम् । उपलक्षणमेतत् । एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उप स्पृशामि । यद्वा । अस्य भूलोकस्य मूर्धन् मूर्धन्युपर्यहं पितरमाकाशं सुवे । समुद्रे जलधावप्सूदकेष्वन्तर्मध्ये मम योनिः कारणभूतोऽम्भृणाख्य ऋषिर्वर्तते । यद्वा । समुद्रेऽन्तरिक्षेऽप्स्वम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्यं वर्तते । ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि । अन्यत्समानम् ॥

शब्दा०—अहम् = मैं, सुवे = उत्पन्न करती हूँ, पितरम् = पिता. द्युलोक को, अस्य = उस परमात्मा के, मूर्धन् = शिर के ऊपर, मम = मेरा, योनिः = मूल स्थान, अन्तः = अन्दर, समुद्रे = समुद्र में, अप्सु = जलों में, ततः = वहीं से, वि तिष्ठे = विविध रूप से स्थित होती हूँ, विश्वा = सम्पूर्ण, भुवना = लोकों को, अनु = क्रमशः, उत = और, अस्य = उस, द्याम् = द्युलोक को, वर्ष्मणा = शिर से, शरीर से, उपस्पृशामि = स्पर्श करती हूँ या व्याप्त करती हूँ ।

अन्वय—अहम् पितरं अस्य मूर्धन् सुवे । मम योनिः समुद्रे अप्सु अन्तः । ततः अनु विश्वा भुवना वि तिष्ठे, उत अमूं द्यां वर्ष्मणा उप स्पृशामि ।

हि॰ अ॰—इस लोक के शिर पर पिता ( द्युलोक ) को उत्पन्न करती हूँ। मेरा मूल स्थान समुद्र में जलों के अन्दर है। वहीं से सम्पूर्ण लोकों को व्याप्त कर स्थित होती है और उस द्युलोक का ( अपने ) शिर से स्पर्श करती हूँ।

*Trans.*—I bring forth the Father on the summit of this ( world ). My home is in the waters in the sea. Thence I extend through all worlds, and touch the yonder heaven with my forehead.

*Notes*—सुवे—√*su* 'to generate' Ātm. pres. 1st. sing. मूर्धन्—Loc. sing. the declensional suffix being dropped ( सुपां सुलुक्॰—Pāṇ VII. 1.39 ). अन्तः—The Visarjanīya is rhotacised, hence, इति in the pada-text. For accent in अप्स्व१न्तः see व्य१र्थिनः ( Ṛv.I.48.6 ). तिष्ठे—√*sthā* 'to stand' Ātm. pres. 1st. sing. वर्ष्मणा—Instr. sing of the stem वर्ष्मन् from √*vṛdh* 'to grow' + मनिन्. ; the word वृद्ध becomes वर्ष ( प्रियस्थिरस्फिरोरुबहुगुरुवृद्धतृपदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः— ) ( Pāṇ. VI. 4.157. ) 'with the head '( Peterson )' 'with the forehead' ( Griffith )' 'body' ( Sāyaṇa ). स्पृशामि—√*spṛś* 'to touch', pres. 1st. sing.

अहमेव वातइव प्र वा-
म्यारभमाणा भुवनानि विश्वा।
परो दिवा पर एना पृथि-
व्यैतावती महिना सं बभूव ॥ ८ ॥

अहम्। एव। वातःऽइव। प्र। वामि। आऽरभमाणा। भुवनानि। विश्वा ॥ परः। दिवा। परः। एना। पृथिव्या। एतावती। महिना। सम्। बभूव ॥ ८ ॥

सा॰ भा॰—विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्र वामि प्रवर्ते।

वातइव यथावातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत्। उक्तं सर्वं निगमयति। परो दिवा। पर इति सकारान्तं परस्तादित्यर्थे वर्तते यथा अध इत्यधस्तादर्थे। तद्योगे च तृतीया सर्वत्र दृश्यते। दिव आकाशस्य परस्तात्। एना पृथिव्या॥ 'द्वितीयाटौः स्वेनः' (पा० सू० २.४.३४) इतीदम एनादेशः। अस्याः पृथिव्याः परः परस्तात्। द्यावापृथिव्योरुपादानमुपलक्षणम्। एतदुपलक्षितात् सर्वस्मात् विकारजातात् परस्ताद्वर्तमाना सङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती सं बभूव। एतच्छब्देनोक्तं सर्वं परामृश्यते। एतत्परिमाणमस्याः। 'यत्तदेतेभ्यः परिमाणे०' (पा० सू० ५.२.३९) इति वतुप्। 'आ सर्वनाम्नः' (पा० सू० ६.३.९१) इत्यात्वम्। सर्वजगदात्मनाहं संभूतास्मि॥ महच्छन्दादिमनिचि 'टेः' (पा० सू० ६.४.१५५) इति टिलोपः। ततः तृतीयायामुदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वम्। छान्दसो मलोपः।

शब्दा०—अहम् = मैं, एव = ही, वातःइव = वायु के समान, प्र वामि = प्रवाहित होती हूँ, आरभमाणा = ग्रहण करती हुई, भुवनानि = लोकों को, विश्वा = सम्पूर्ण, परः = परे, दिवा = द्युलोक के, परः = परे, एना = इस, पृथिव्या = पृथिवी के, एतावती = इतनी, महिना = महिमा से, संबभूव = हुई हूँ।

अन्वय—अहं विश्वा भुवनानि आरभमाणा वातः इव प्र वामि। दिवः परः एना पृथिव्या परः एतावती महिमा संबभूव।

हि० अ०—सम्पूर्ण लोकों को ग्रहण करती हुई मैं ही वायु के समान सर्वत्र विचरण करती हूँ। द्युलोक से परे तथा इस पृथिवी से परे इतनी (विशाल अपनी) महिमा से हुई हूँ।

***Trans.***—I blow as the wind (blows), taking hold of all worlds. Beyond the heaven and beyond the earth I have become so mighty through my grandeur.

***Notes***—वामि—√ *Vā* 'to blow' pres. 1st. sing. आरभमाणा—√ *rabh* 'to hold' with the suffix शानच्; fem. nom. sing. महिना—See notes on Ṛv. VII. 86.1. बभूव—√ *bhū* 'to be' perf. 1st. sing.

No. 14 X. 151

# ŚRADDHĀ

'श्रद्धया' इति पञ्चर्चं त्रयोविंशं सूक्तमानुष्टुभं श्रद्धादेवत्यम्। कामगोत्रजा श्रद्धा नामर्षिका। तथा चानुक्रम्यते—'श्रद्धया श्रद्धा कामायनी श्राद्धमानुष्टुभं तु' इति। लैङ्गिको विनियोगः॥

श्रद्धयाग्निः समिध्यते
श्रद्धया हूयते हविः।
श्रद्धां भगस्य मूर्धनि
वचसा वेदयामसि॥ १॥

श्रद्धया। अग्निः। सम्। इध्यते। श्रद्धया। हूयते। हविः॥
श्रद्धाम्। भगस्य। मूर्धनि। वचसा। आ। वेदयामसि॥ १॥

सा० भा०—पुरुषगतोऽभिलाषविशेषः श्रद्धा। तया श्रद्धया अग्निः गार्हपत्यादिः समिध्यते संदीप्यते। यदा हि पुरुषे श्रद्धाग्निगोचर आदरातिशयो जायते तदैव पुरुषोऽग्नीन् प्रज्वालयति नान्यथा। श्रद्धया एव हविः पुरोडाशादिहविश्च हूयते। आहवनीये प्रक्षिप्यते। यद्वा। अस्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्ययाग्निः समिध्यते। श्रद्धाम् उक्तलक्षणायाः श्रद्धायाः अभिमानिदेवतां भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थानेऽवस्थितां वचसा वचनेन स्तोत्रेण आ वेदयामसि अभितः प्रख्यापयामः। इदन्तो मसिः॥

शब्दा०—श्रद्धया = श्रद्धा से, अग्निः = अग्नि, समिध्यते = प्रज्वलित किया जाता है, श्रद्धया = श्रद्धा से, हूयते = प्रदान की जाती है, हविः = हवन का पदार्थ, श्रद्धाम् = श्रद्धा की, भगस्य = भाग्य की, मूर्धनि = शिर पर अर्थात् प्रधान, वचसा = स्तुति से, आ वेदयामसि = हम प्रार्थना करते हैं।

अन्वय—श्रद्धया अग्निः समिध्यते। श्रद्धया हविः हूयते। भगस्य मूर्धनि श्रद्धां वचसा आ वेदयामसि।

हि० अ०—श्रद्धा से अग्नि प्रज्ज्वलित किया जाता है; श्रद्धा से हवि प्रदान की जाती है; श्रद्धा (जो) भाग्य की प्रधान है, उसकी हम स्तुति द्वारा प्रार्थना करते हैं।

*Trans.*—By Faith fire is kindled; through Faith oblation is offered; we celebrate with praise Faith upon the head of happiness.

*Notes*—समिध्यते—सम् + √*idh* 'to kindle,' pres. pass. 3rd sing. हूयते—√*hu* 'to sacrifice,' pres. pass. 3rd sing. श्रद्धाम्—श्रद्धा is an abstract deity. It is the deification of faith. आ वेदयामसि—√*vid* with आ 'to celebrate,' pres. 1st. plu. In Vedic language मसि is more comman than मस् in pres. 1st. plu.

प्रियं श्रद्धे ददतः
प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्व-
स्विदं म उदितं कृधि ॥ २ ॥

प्रियम् । श्रद्धे । ददतः । प्रियम् । श्रद्धे । दिदासतः ॥ प्रियम् । भोजेषु । यज्वऽसु । इदम् । मे । उदितम् । कृधि ॥ २ ॥

सा० भा०—हे श्रद्धे ददतः चरुपुरोडाशादीनि प्रयच्छतो यजमानस्य प्रियन् अभीष्टफलं कुरु । दिदासतः दातुमिच्छतश्च हे श्रद्धे प्रियं कुरु । मे मम संबन्धिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु जनेषु च इदम् उदितम् प्रियं कृधि कुरु ॥

शब्दा०—प्रियम् = अभीष्ट, श्रद्धे = हे श्रद्धा, ददतः = देनेवाले का, प्रियम् = अभीष्ट, श्रद्धे = हे श्रद्धा, दिदासतः = देने की इच्छा करनेवाले का प्रियम् = अभीष्ट, भोजेषु = उदार, यज्वसु = यजमानों का, इदम् = इस, मे = मेरे, उदितम् = कथन के अभीष्ट को, कृधि = पूरा करो ।

अन्वय—(हे) श्रद्धे, ददतः प्रियम् (कृधि); (हे) श्रद्धे, दिदासतः प्रियं (कृधि) भोजेषु यज्वसु प्रियं (कृधि), मे इदम् उदितं (प्रियं) कृधि।

हि० अ०—हे श्रद्धा, देनेवाले का अभीष्ट पूरा करो; हे श्रद्धा, देने की इच्छा करनेवाले का अभीष्ट पूरा करो; उदार यजमानों का अभीष्ट पूरा करो; मेरे इस कथन ( के अभीष्ट ) को पूरा करो।

***Trans.***—O Faith, (do) good of the offerer, O Faith, (do) good of him who desires to give ; (do) good of the liberal sacrificers ; fulfil my this expressed (desire).

*Notes*—दद॑तः–Gen. sing. of ददत् from √*dā* 'to give' with the suffix शतृ. दिद॑सतः—√*dā* to give, desid. pres. part., gen. sing. of दिद॑सत्. उ॒दि॒तम्—√*vad* 'to speak' with the suffix क्त ; व has changed into उ by samprasāraṇa. कृ॒धि—√*kṛ* 'to make', root-aorist, impv. 2nd sing.

यथा॑ दे॒वा असु॑रेषु
श्र॒द्धामु॒ग्रेषु॑ च॒क्रि॒रे ।
ए॒वं भो॒जेषु॒ यज्व॑-
स्व॒स्माक॑मु॒दि॒तं कृ॑धि ॥ ३ ॥

यथा॑ । दे॒वाः । असु॑रेषु । श्र॒द्धाम् । उ॒ग्रेषु॑ । च॒क्रि॒रे ॥ ए॒वम् । भो॒जेषु॑ । यज्व॑ऽसु । अ॒स्माक॑म् । उ॒दि॒तम् । कृ॒धि॒ ॥ ३ ॥

सा० भा०—देवाः इन्द्रादयः असुरेषु उद्गूर्णबलेषु यथा श्रद्धां चक्रिरे अवश्यमिमे हन्तव्या इत्यादरातिशयं कृतवन्तः एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृषु अस्माकम् अस्मत्संबन्धिषु तेषु उदितं तैरुक्तं प्रार्थितं फलजातं कृधि कुरु ।

शब्दा०—यथा = जिस प्रकार, देवाः = देवताओं ने, असुरेषु = असुरों में, श्रद्धाम् = श्रद्धा को, उग्रेषु = प्रचण्ड बलवाले, चक्रिरे = किया था, एवम् = उसी प्रकार, भोजेषु = उदार, यज्वसु = यजमानों में, अस्माकम् = हमारे, उदितम् = कथन के अभीष्ट को, कृधि = पूर्ण करो।

अन्वय—देवाः यथा उग्रेषु असुरेषु श्रद्धां चक्रिरे, एवं भोजेषु यज्वसु ( त्वं श्रद्धां कृधि ) अस्माकम् उदितं कृधि ।

हि॰ अ॰—जिस प्रकार देवताओं ने भयानक असुरों में श्रद्धा किया था, उसी प्रकार ( तुम ) उदार यजमानों में ( श्रद्धा करो ); हमलोगों के इस कथन के अभीष्ट को पूरा करो।

*Trans.*—As the gods had faith in the terrible demons, so do thou in liberal sacrificers ; fulfil our this expressed desire.

*Notes*—असुरेषु—'The ancient Āryan gods, Dyaus, Varuṇa and some others' ( Griffith ), 'demons' ( Sāyaṇa ). चक्रिरे—√*kṛ* 'to make', perf. Ātm. 3rd. plu. ; not unaccented because preceded by यथा.

श्रद्धां देवा यजमाना
वायुगोपा उपासते ।
श्रद्धां हृदय्य१याकूत्या
श्रद्धया विन्दते वसु ॥ ४ ॥

श्रद्धाम् । देवाः । यजमानाः । वायुऽगोपाः । उप । आसते ॥
श्रद्धाम् । हृदय्यया । आऽकूत्या । श्रद्धया । विन्दते । वसु ॥ ४ ॥

सा॰ भा॰—देवा यजमानाः मनुष्याश्च वायुगोपाः वायुर्गोपा रक्षिता येषां ते तादृशाः सन्तः श्रद्धां देवीम् उपासते प्रार्थयन्ते । हृदय्यया । हृदये भवा हृदय्या । तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धाम् एव परिचरन्ति सर्वे जनाः । कुत इत्यत आह । अतः कारणात् श्रद्धया हेतुभूतया वसु धनं विन्दते लभते श्रद्धावाञ्जनः । तत इत्यर्थः ॥

शब्दा॰—श्रद्धाम् = श्रद्धा को, देवाः = देवता, यजमानाः = यजमान, वायुगोपा = वायु से रक्षित, उपासते = उपासना करते हैं, श्रद्धाम् = श्रद्धा को, हृदय्यया = हार्दिक, आकूत्या = संकल्प से, श्रद्धया = श्रद्धा से, विन्दते = प्राप्त करता है, वसु = सम्पत्ति ।

अन्वय—वायुगोपाः देवाः यजमानाः च श्रद्धाम् उपासते; हृदय्यया आकूत्या श्रद्धाम् ( उपासते ) । श्रद्धया वसु विन्दते ।

हिं० अ०—वायु से रक्षित सभी देवता तथा यजमान अपने हार्दिक संकल्प से केवल श्रद्धा की ही उपासना करते हैं। श्रद्धा से ही मनुष्य सम्पत्ति प्राप्त करता है।

*Trans.*—Gods, sacrficers, all protected by Vāyu worship Faith and the Faith only by their heart-felt intenton. By Faith ( one ) obtains wealth.

*Notes*—वायुगोपाः—Whose protector is Vāyu; Bahuvrīhi compd. accentad on the first member. उपासते—*ās* √ with उप 'to worship' ( Sāyaṇa ), 'to draw near' ( Griffith ), pres. Ātm. 3rd. plu. आकूत्या—Instr. sing. of आकूति ( from √ *kū* to make sound ) ; intention. will. For accent in हृदय्य या आकूत्या see क्व स्यः ( Ṛv. II. 33.7 ). विन्दते—√ *vid* to find. Atm. 3rd. sing. Griffith supplies विन्दते also to the third pāda and renders as 'man winneth faith by yearnings of the heart. Sāyaṇa construes first, second and third pādas together and according to him, the repetition of श्रद्धा in the 3rd pāda is to lay emphasis.

श्रद्धां प्रातर्हवामहे
श्रद्धां मध्यन्दिनं परि।
श्रद्धां सूर्यस्य निम्रुचि
श्रद्धे श्रद्धापयेह नः॥ ५॥

श्रद्धाम्। प्रातः। हवामहे। श्रद्धाम्। मध्यंदिनम्। परि॥ श्रद्धाम्। सूर्यस्य। निऽम्रुचि। श्रद्धे। श्रत्। धापय। इह। नः॥ ५॥

सा० भा०—श्रद्धां देवीं प्रातः पूर्वाह्णे हवामहे। तथा मध्यंदिनं परि। लक्षणे परेः कर्मप्रवचनीयत्वम्। मध्यंदिनं परिलक्ष्य। मध्यंदिनं इत्यर्थः। मध्याह्नेऽपि तां श्रद्धाम् आह्वयामहे। सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य निम्रुचि

अस्तमयवेलायां सायंसमयेऽपि तामेव श्रद्धाम् आह्वयामहे। इहग्रूपे हे श्रद्धे नः अस्मान् इह लोके कर्मणि वा श्रद्धापय श्रद्धावतः कुरु ॥

शब्दा॰—श्रद्धाम् = श्रद्धा को, प्रातः = प्रातःकाल, हवामहे = पुकारते हैं, श्रद्धाम् = श्रद्धा को, मध्यंदिनम् = दोपहर को, परि = यह कर्मप्रवचनीय है, श्रद्धाम् = श्रद्धा को, सूर्यस्य = सूर्य के, निम्रुचि = अस्त होने पर, श्रद्धे = हे श्रद्धा, श्रत् = श्रद्धा से, धापय = युक्त करो, इह = यहाँ, नः = हमलोगों को।

अन्वय—( वयं ) प्रातः श्रद्धां हवामहे; मध्यंदिनं परि श्रद्धां ( हवामहे ); सूर्यस्य निम्रुचि श्रद्धां ( हवामहे )। ( हे ) श्रद्धे इह नः श्रत् धापय।

हि॰ अ॰—हम लोग प्रातःकाल श्रद्धा को पुकारते हैं, दोपहर में श्रद्धा को ( पुकारते हैं ), सूर्यास्त होने पर श्रद्धा को ( पुकारते हैं )। हे श्रद्धा, यहाँ पर हमलोगों को श्रद्धावान् बनावो।

*Trans.*—We invoke Faith in the morning, Faith in the midday, Faith at the setting of the sun. O Faith, endow us with faith here.

*Notes*—हवामहे—√ *hū* 'to call' pres. Ātm. 1st. plu. निम्रुचि—At the setting; loc. sing. of निम्रुक्. धापय—√ *dhā* 'to suck,' caus. impv. 2nd. sing.

# SAJÑĀNA

'संसम्' इति चतुर्ऋचं चत्वारिंशं सूक्तं संवननस्यार्षम्। 'समानो मन्त्रः' इति तृतीया त्रिष्टुप् शिष्टास्तिस्रोऽनुष्टुभः। प्रथमाया अग्निर्देवता। शिष्टानां संज्ञानम्। अनुक्रम्यते च—'संसं चतुष्कं संवननः संज्ञानमाद्याग्नेयी तृतीया त्रिष्टुप्' इति। 'आनुष्टुभं तु' इति पूर्वमुक्तत्वादवशिष्टानामनुष्टुप्त्वम्। सूक्तविनियोगो लैङ्गिकः॥

संस॒मिद्यु॑वसे वृष॒-
न्नग्ने॒ विश्वा॑न्य॒र्य आ।
इ॒ळस्प॒दे समि॑ध्यसे॒
स नो॒ वसू॒न्या भ॑र॥ १॥

सम्ऽस॑म्। इत्। यु॒वसे॒। वृ॒षन्। अग्ने॑। विश्वा॑नि। अ॒र्यः। आ॥
इ॒ळः। प॒दे। सम्। इ॒ध्य॒से॒। सः। न॒ः। वसू॑नि। आ। भ॒र॥१॥

सा० भा०—हे वृषन् कामानां वर्षितः अग्ने अर्यः ईश्वरस्त्वम् 'अर्यः स्वामिवैश्ययोः' (पा० सू० ३. १. १०३) इति यत्प्रत्ययान्तो निपातितः। 'अर्यः स्वाम्याख्यायाम्' (फि० सू० १. १८) इत्यन्तोदात्तत्वम्। स त्वं विश्वानि सर्वाणि भूतजातानि संसम्। 'प्रसमुपोदः पादपूरणे' (पा० सू० ८. १. ६) इति समो द्विर्वचनम्। इच्छब्दोऽवधारणे। आ समन्तात् सं युवसे मिश्रयसि। देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि। नान्य इत्यर्थः। किंच इळः इडायाः पृथिव्याः पदे स्थाने उत्तरवेदिलक्षणे। 'एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः' (ऐ० ब्रा० १. २८) इति ब्राह्मणम्। तत्र त्वं समिध्यसे ऋत्विग्भिः संदीप्यसे। सः तादृशस्त्वं नः अस्माकं वसूनि धनानि आ भर आहर॥

शब्दा०—संसम् = सम् उपसर्ग की आवृत्ति की गई है, इत्=एक निपात, संयुवसे = मिलाते हो, वृषन् = हे इच्छाओं को पूरा करनेवाले, अग्ने = हे

अग्नि, विश्वानि = सबको, अर्यः = स्वामी, आ = पदपूरण के लिये प्रयुक्त निपात, इळस्पदे = वेदि पर, समिध्यसे = प्रज्वलित किये जाते हो, सः = वह (तुम) नः = हमलोगों के लिये, वसूनि = सम्पत्ति, आभर = लावो।

अन्वय—(हे) वृषन् अग्ने, अर्यः विश्वानि आ संसम् इत् युवसे। (त्वम्) इळस्पदे समिध्यसे। सः (त्वम्) नः वसूनि आ भर।

हि० अ०—हे इच्छाओं को पूरा करनेवाले अग्नि, स्वामी (के रूप में तुम) सबको चारों तरफ से मिलाते हो। तुम वेदि पर प्रज्वलित किये जाते हो; ऐसे तुम हमलोगों के लिये सम्पत्ति लावो।

***Trans.***—O Agni, the fulfiller of desires, as a lord (thou) unitest all on all sides. Thou art kindled at the altar of earth. Thou as such bring opulence on all sides.

***Notes***—संसम्—Iterative compd.; Sāyaṇa takes it as an expletive particle. युवसे—√ ***yu*** 'to unite', pres. Ātm, 2nd. sing. अर्यः—Lord (Sāyaṇa), friends (Griffith). इळस्पदे—'At the place of earth' (Sāyaṇa), 'in libations place' (Grffith). समिध्यसे—√ ***idh*** to kindle, pres. pass. 2nd. sing. आ भर—√***bhr***, with आ 'to bring' pres. impv. 2nd. sing.

सङ्गच्छध्वं सं वदध्वं
सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे
सञ्जानाना उपासते ॥ २ ॥

सम्। गच्छध्वम्। सम्। वदध्वम्। सम्। वः। मनांसि। जानताम् ॥ देवाः। भागम्। यथा। पूर्वे। सम्ऽजानानाः। उपऽआसते ॥ २ ॥

सा० भा०—हे स्तोतारः यूयं स गच्छध्वम्। संगताः संभूता भवत। 'समो गम्यृच्छि' इत्यादिना गमेरात्मनेपदम्। तथा सं वदध्वं सह वदत। परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूतेति यावत् 'व्यक्तवाचां समुच्चारणे'

( पा० सू० १. ३. ४८ ) इति वदेरात्मनेपदम् । वः युष्माकं मनांसि सं जानताम् समानमेकरूपमेवार्थमवगच्छन्तु । 'संप्रतिभ्यामनाध्याने' ( पा० सू० १. ३. ४६ ) इति जानातेरात्मनेपदम् । यथा पूर्वे पुरातनाः देवाः संजानानाः ऐकमत्यं प्राप्ता हविर्भागम् उपासते यथा स्वं स्वीकुर्वन्ति तथा यूयमपि नैमत्यं परित्यज्य घनं स्वीकुरुतेति शेषः ।

शब्दा०—संगच्छध्वम् = एक साथ जावो, संवदध्वम् = एक साथ बोलो, वः = तुमलोगों का; मनांसि = मन, संजानताम् = एक मतवाला हो, देवाः = देवः, भागम् = हिस्सा, यथा = जिस प्रकार, पूर्वे = पुराने, संजानानाः = एकमत होकर, उपासते = स्वीकार करते हैं ।

अन्वय—संगच्छध्वम् संवदध्वम्, वः मनांसि संजानताम्, यथा पूर्वे देवाः संजानानाः भागं उपासते ।

हि० अ०—एक साथ जावो, एक साथ बोलो, तुम्हारा मन एक मत होवे, जिस प्रकार पुराने देव एक मत होकर यज्ञ-भाग स्वीकार करते हैं ।

*Trans.*—Go together, speak together, let your minds be of one accord, as the ancient gods with one accord accept their sacrificial share.

*Notes*—संगच्छध्वम्—√*gam* with सम् 'to go together', Atm. impv 2nd. plu. संवदध्वम्—√*vad* with सम् 'to speak together' Atm. impv. 2nd. plu. सं जानताम्—√*jña* with सम् 'to be of one accord'. Atm. impv. 3rd. plu. संजानानाः—√*jña* with सम 'to be of one accord,' pres. part. nom. plu. उपासते—√*as* with उप 'to accept', pres. Atm. plu.; not unaccented because preceded by यथा.

समानो मन्त्रः समितिः समानी
संमानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः
समानेन वो हविषा जुहोमि ॥ ३ ॥

समानः । मन्त्रः । समऽइतिः । समानी । समानम् । मनः

सह । चित्तम् । एषाम् ॥ समानम् । मन्त्रम् । अभि । मन्त्रये । वः । समानेन । वः । हविषा । जुहोमि ॥ ३ ॥

सा० भा०—पूर्वोऽर्धर्चः परोक्षकृतः उत्तरः प्रत्यक्षकृतः । एषाम् एकस्मिन् कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्रः स्तुतिः शस्त्राद्यात्मका गुप्त-भाषणं वा समानः एकविधोऽस्तु । तथा समितिः प्राप्तिरपि समानी एक-रूपास्तु । 'केवलमामक' इत्यादिना समानशब्दात् ङीप् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तथा मनः मनसाधनमन्तकरणं चैषां समानम् एकविध-मप्यस्तु । चित्तं विचारणं ज्ञानं तथा सह सहितं परस्परस्यैकार्थेनैकीभूतमस्तु । अहं च वः युष्माकं समानम् एकविधं मन्त्रम् अभि मन्त्रये । ऐकविध्याय संस्करोमि । तथा वः युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरु-पुरोडाशादिना अहं जुहोमि । 'तृतीया च होश्छन्दसि' ( पा० सू० २. ३. ३ ) इति कर्मणि कारके तृतीया । वषट्कारेण हविः प्रक्षेपयामीत्यर्थः ॥

शब्दा०—समानः = समान, मन्त्रः = स्तुति, समितिः = प्राप्ति, समानी = समान, समानम् = समान, मनः = मन, सह = संयुक्त, चित्तम् = अन्तःकरण, एषाम् = इनका, समानम् = समान, मन्त्रम् = स्तुति को, अभि मन्त्रये = संबोधित करता हूँ, वः = तुम लोगों के, समानेन = समान, वः = तुम लोगों के, हविषा = हवि से, जुहोमि = हवन करता हूँ ।

अन्वय—एषां मन्त्रः समानः, समितिः समानी, मनः समानं, चित्तं सह ( अस्तु ) । वः समानं मन्त्रम् अभि मन्त्रये; वः समानेन हविषा जुहोमि ।

हि० अ०— इनकी स्तुति समान हो. प्राप्ति भी समान हो, मन समान हो, चित्त संयुक्त हो । तुम लोगों की समान स्तुति को मैं संबोधित करता हूँ; तुम लोगों के समान हवि से मैं हवन करता हूँ ।

*Trans.*—Let their hymn be the same, their gain be the same, their mind be the same ; their heart be united. I address your same hymn, I offer with your same oblation.

*Notes*—मन्त्रः—'Hymn' ( Sāyaṇa ), 'place' ( Griffith ). समितिः—√*i* with सम् 'to go together. Sāyaṇa takes it to mean 'gain' and Griffith as 'assembly.' अभिमन्त्रये—√*mantra* with अभि 'to consecrate,' 'to address' pres. Atm. 1st., sing. जुहोमि—√*hu* 'to sacrifice' pres. 1st. sing.

समानी व आकूतिः
समाना हृदयानि वः ।
समानमस्तु वो मनो
यथा वः सुसहासति ॥ ४ ॥

समानी । वः । आऽकूतिः । समाना । हृदयानि । वः ॥ समानम् । अस्तु । वः । मनः । यथा । वः । सुऽसह । असति ॥ ४ ॥

सा० भा०—हे ऋत्विग्यजमानाः वः युष्माकम् आकूतिः संकल्पोऽध्यवसायः समानी एकविधोऽस्तु । तथा वः युष्माकं हृदयानि समाना समानान्येकविधानि सन्तु । तथा वः युष्माकं मनः अन्तःकरणम् । प्रत्येकापेक्षयैकवचनम् । तदपि समानमस्तु । यथा वः युष्माकम् सुसह शोभनं साहित्यम् असति भवति तथा समानमस्त्वित्यन्वयः । अस्तेर्लेटि 'बहुलं छन्दसि' इति शपो लुगभावः ॥

शब्दा०—समानी = समान, वः = तुम लोगों का, आकूतिः = संकल्प, समाना = समान, हृदयानि = अन्तःकरण, वः = तुम लोगों का, समानम् = समान, अस्तु = हो, वः = तुम लोगों का, मनः = मन, यथा = जिस प्रकार, वः = तुम लोगों का, सुसह = सुन्दर साथ, असति = हो ।

अन्वय—वः आकूतिः समानी ( अस्तु ); वः हृदयानि समाना ( सन्तु ); वः मनः समानम् अस्तु, यथा वः सुसह असति ।

हि० अ०—तुम्हारा संकल्प समान हो, तुम्हारा अन्तःकरण समान हो, तुम्हारा मन समान हो, जिससे तुम्हारा सुन्दर साथ हो सके ।

***Trans.***—Be your intention the same, your hearts the same, your mind the same, that it may be a good-company for you.

***Notes***—आकूतिः—See note X.151.4. असति—√*as* 'to be', pres. subju. 3rd. sing. ; not unaccented because preceded by यथा.

# ŚUKLA YAJURVEDA

No. 16 XXXI

## PURUSA SŪKTA

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिꣳसर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

म० भा०—'नियुक्तान्ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति' ( का. २१.१.११ )। अस्यार्थः नियुक्तान्ब्राह्मणमित्यादिपशून् सहस्रशीर्षेत्यनुवाकेन षोडशर्चेन ब्रह्मा स्तौति होतृवदिति त्रिः प्रथमां त्रिरुत्तमामित्याद्युक्तप्रकारेणेत्यर्थः । ···अथ मन्त्रार्थः। नारायणपुरुषदृष्टा जगद्बीजपुरुषदेवत्याः षोडश ऋचः पञ्चदशानुष्टुभः ! षोडशी त्रिष्टुप्। ब्रह्मणे ब्राह्मणमित्याद्याः पुरुषमेधरूपस्य परमात्मनोऽवयवाः पूर्वाध्यायान्ते प्रोक्तास्तेषामवयवी पुरुषोऽत्र स्तूयते। अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः 'पुरुषान्न परं किञ्चिद्' इत्यादिश्रुतिषु प्रसिद्धः सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराजाख्योऽस्ति । कीदृशः । सहस्रशीर्षा सहस्रशब्दो बहुत्ववाची। संख्यावाचकत्वे सहस्राक्ष इति विरोधः स्यात् नेत्रसहस्रद्वयेन च भाव्यम् । ततः सहस्रमसंख्यानि शीर्षाणि शिरांसि यस्य सः 'शीर्षश्छन्दसि' ( पा. ६ १.६० ) इति शिरः शब्दस्य शीर्षकादेश । शिरोग्रहणं सर्वावयवोपलक्षणम् । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तस्यैवेति सहस्रशीर्षत्वम् । एवमग्रेऽपि । सहस्राक्षः सहस्राक्षीणि यस्य सः । अक्षि ग्रहणं सर्वज्ञानेन्द्रियोपलक्षकम् । सहस्रपात् सहस्रं पादा यस्य 'संख्यासुपूर्वस्य' ( पा. ५.४.१४० ) इति पादस्यान्त्यलोपः । पादग्रहणं कर्मेन्द्रियोपलक्षणम् । सः पुरुषो भूमिं ब्रह्माण्डलोकरूपां सर्वतः तिर्यक् ऊर्ध्वमधश्च स्पृत्वा व्याप्य । स्पृणोतिर्व्याप्तिकर्मा । यद्वा भूमिशब्दो भूतोपलक्षकः । पञ्च भूतानि व्याप्य दशाङ्गुलपरिमितं देशमत्यतिष्ठत् अतिक्रम्यावस्थितः । दशाङ्गुलमित्युपलक्षणम् । ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः । यद्वा नाभेः सकाशाद्दशाङ्गुलमतिक्रम्य हृदि स्थितः । नाभित इति कुतो लभ्यते ? 'कतम आत्मे' त्युपक्रम्य 'सोऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति श्रुतेः विज्ञानात्मनो

द्व्यवस्थानं कर्मफलोपभोगाय अन्तर्यामिणो नियन्तृत्वेन। तदुक्तम्—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति (मुण्ड. ३.१.१) इति। स पुरुषोऽत्र देवता। तथा च श्रुतिः 'इमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते योऽस्यां पुरि शेते तस्मात् पुरुषः (श. ब्रा. १३.६.२.१) इति॥

शब्दा०—सहस्रशीर्षा=असंख्य सिर वाला, पुरुषः=परम पुरुष, सहस्राक्षः=असंख्य आखों वाला, सहस्रपात=असंख्य पैरों वाला, सः=वह, भूमिम्=पृथिवी को, सर्वतः=चारों तरफ से, स्पृत्वा=व्याप्त कर, अति=अधिक, अतिष्ठत्=स्थित है, दशाङ्गुलम्=दस अङ्गुल परिमाण में।

अन्वय—पुरुषः सहस्रशीर्षा सहस्राक्षः सहस्रपात्। सः भूमिं सर्वतः स्पृत्वा दशाङ्गुलम् अति अतिष्ठत्।

हि० अ०—परमेश्वर पुरुष असंख्य सिर वाला, असंख्य नेत्रों वाला तथा असंख्य पैरों वाला है। वह पृथिवी को चारों तरफ से व्याप्त करके दस अङ्गुल परिमाण में अधिक स्थित है।

*Trans.*—The perfect Being has thousands of heads, thousands of eyes and thousands of feet. Having pervaded the whole earth he remains ten fingers in surplus.

*Notes*—सहस्रशीर्षा—The word indicates the innumerability of the limbs of the Supreme Puruṣa; Bahuvrīhi compd. accented on the first member. In the traditional recitation it is pronounced as सहस्रशीरेखा. सहस्राक्षः—Bahuvrīhi compd. irregularly accented on the second member. स्पृत्वा—√*spṛ* 'to pervade' gerund in त्वा. भूमिं ँ सर्वतः—In the Śukla YV. anusvāra followed by ह, श, ष, स is pronounced as 'ग्वं' and is shown by the sign ँ in the written text. However, among the Ṛgvedins it is not prevalent. cf. स भूमिं विश्वतो वृत्वा (Ṛv. X. 90·1). अतिष्ठत्—√ *sthā* 'to stand', impf. 3rd. sing.

पुरुष एवेदꣳसर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

म० भा०—यत् इदं वर्तमानं जगत् तत्सर्वं पुरुष एव। यत् भूतमतीतं जगत् यच्च भाव्यं भविष्यं जगत् तदपि पुरुष एव। यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमिति भावः। उतापि च अमृतत्वस्य देवस्य ईशान स्वामी स पुरुषः यत् यस्मात् अन्नेन प्राणिनां भोग्येनान्नेन फलेन निमित्तभूतेनातिरोहति स्वीयां कारणावस्थायामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्पुरुष एव। प्राणिनां कर्मफलभोगाय जगदवस्थां स्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः। यद्वा सर्वं पुरुषश्चेत्तर्हि परिणामीत्याशङ्क्याह। अमृतत्वस्यामरणधर्मस्येशानः मुक्तेरीशः। यो हि मोक्षेश्वरो नासौ म्रियत इत्यर्थः किंच यत् जीवजातमन्नेनातिरोहति उत्पद्यते तस्य सर्वस्य चेशानः ब्रह्मादिस्तम्बपर्यन्तो भूतग्राम उक्तः तस्यान्नेनैव स्थितेः 'इतः प्रदानाद्धि देवा उपजीवन्ति' इति श्रुतेः॥

शब्दा०—पुरुषः = परम पुरुष, एव = ही, इदम् = यह, सर्वम् = सम्पूर्ण, यत् = जो, भूतम् = हो गया है, यत् = जो, च = और, भाव्यम् = होनेवाला है, उत = और, अमृतत्वस्य = अमरत्व का, ईशानः = स्वामी, यत् = जो, अन्नेन = अन्न से, अतिरोहति = समृद्ध होता है।

अन्वय—इदं सर्वं यत् भूतं यत् च भाव्यं पुरुषः एव। (सः) अमृतत्वस्य ईशानः उत यत् अन्नेन अतिरोहति (तस्यापि ईशानः)।

हिं० अ०—यह सब, जो हो गया है तथा जो होगा, पुरुष ही है। और वह अमरत्व का स्वामी है, तथा जो अन्न से समृद्ध होता है (उसका भी)।

*Trans.*—All present, past and future (objects of this universe) is the Perfect Being. And (He) is the Lord of immortality and all (of) that grows and develops with food.

*Notes*—भूतम्–√*bhū* 'to be' + क्त. भाव्यम्–√*bhū* 'to be', with the suffix ण्यत्. The suffix being तित् it bears the Jātya svarita on the final syllable (तित्स्वरितम्—Pāṇ. VI 1. 185). In the Sukla YV. independent Svarita not followed by Udātta is marked by the sign ⌊ bellow. ईशानः–√*īś* 'to be master' + शानच्. अतिरोहति–√*ruh* 'to ascend' pres. 3rd. sing.; not

unaccented because preceded by यत्. 'उत'''अतिरोहति'—This hemistich has variously been interpreted by the scholars: 'he is the lord or distributer of immortality because he becomes the visible world in order that living beings may obtain the fruits of their actions and gain mokṣa or final liberation from their bonds' ( Sāyaṇa ) ; 'he is also the lord of immortality ; for he mounts beyond ( his own condition ) for the food ( of living beings )—( Wilson ) ; 'he is that which grows by nourishment, and he is the distributer of immortality' ( Colebrooke ) ; 'he is also the lord of immortality since by food he expands' (Muir) ; 'since he stretches for above what exists by food'. ( Ludwig ) ; 'ruling over immortality, he was all that grows by food' ( Peterson ).

एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

म० भा०—अतीतानागतवर्तमानकालसंबद्धं जगद्यावदस्ति एतावान्सर्वोऽपि अस्य पुरुषस्य महिना स्वकीयसामर्थ्यविशेषो विभूतिः न तु वास्तवं स्वरूपम् । वास्तवपुरुषस्तु अतः अस्मात् महिम्ना जगज्जालात् ज्यायांश्च अतिशयेनाधिकः । एतदुभयं स्पष्टीक्रियते । अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रमवर्तीनि प्राणिजातानि पादश्चतुर्थांश. । अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपम् अमृतं विनाशरहितं तत् दिवि द्योतनात्मके स्वप्रकाशे स्वरूपेऽवतिष्ठत इति शेषः । यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याम्नातस्य परब्रह्मण इयत्ताया· अभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ॥

शब्दा०—एतावान्=इतनी, अस्य=उसकी, महिमा=ऐश्वर्य, अतः =उससे भी, ज्यायान्=बढ़कर, च=और, पुरुषः=परम पुरुष, पादः= एक चौथाई, अस्य=उसका, विश्वा=सम्पूर्ण, भूतानि=प्राणी, त्रिपात् =तीन-चतुर्थांश, अस्य=उसका, अमृतम्=अमर लोक, दिवि=आकाश में

अन्वय—एतावान अस्य महिमा; अतः ज्यायान् च पुरुषः । अस्य पादः विश्वा भूतानि; अस्य त्रिपात् अमृतं दिवि ।

हिं० अ०—इतनी उसकी महिमा है; और उससे भी बड़ा पुरुष है। उसके एक चतुर्थांश में सम्पूर्ण लोक है; उसका तीन-चतुर्थांश, जो अमर लोक है, आकाश में है।

*Trans.*—Such is his greatness, and the Perfect Being is greater than this. All the beings are his one-fourth ; his three-fourth, which is immortal is in the heaven.

*Notes*— एतावान्— In the earlier hymns of the *Ṛv.* final न्, preceded by आ and followed by a vowel, is dropped, the preceding vowel being nasalized. But in the later hymns this practice is irregular. एतावानस्य, being a regular post-Vedic sandhi, indicates the lateness of the hymn. पूरुषः —The first syllable is lengthened.

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥

स० भा०—योऽयं त्रिपात्पुरुषः संसारस्पर्शरहितब्रह्मरूपः अयमूर्ध्वः उदैत् अस्मादज्ञानकार्यात् संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान्। तस्यास्य पादो लेशो जगद्रूपः इह मायायां पुनः अभवत्। सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम् 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' ( गी. १०. ४२. ) इति। ततो मायायामागत्यानन्तरं विष्वङ् विषु सर्वत्राञ्चतीति विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान्। किं कृत्व साशनानशने अभि अभिलक्ष्य अशनेन सह वर्तमानं साशनम् अशनादिव्यवहारोपेतं चेतनप्राणिजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्। ते अभिलक्ष्य स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥

शब्दा०—त्रिपात् = तीन-चतुर्थांश के साथ, ऊर्ध्वः = ऊपर, उत् = ऊपर, ऐत् = चला गया, पुरुषः = परम पुरुष, पादः = एक-चतुर्थांश, अस्य = उसका, इह = यहां, अभवत् = रह गया, पुनः = फिर, ततः = उससे, विष्वङ् = चारों तरफ, वि अक्रामत् = फैलाया, साशनानशने = खानेवाले तथा न खानेवाले अर्थात् जीव तथा निर्जीव, अभि = तरफ।

अन्वय—त्रिपात् पुरुषः ऊर्ध्वः उद् ऐत्; अस्य पादः पुनः इह अभवत्। ततः विष्वङ् साशनानशने अभि वि अक्रामत्।

हि० अ०—तीन-चतुर्थांश के साथ पुरुष ऊपर चला गया; फिर भी एक-चतुर्थांश यहीं पर रह गया। उससे उसने अपने को जीव तथा निर्जीव सभी रूपों में चारों तरफ फैलाया '

*Trans.*—With three-fourth the Perfect Being rose upward ; one-fourth of Him again remained here ; thence he spread on all sides, over what eats and what eats not.

*Notes*—उदै॑त्—√ *i* with उत् 'to rise,' impf. 3rd. sing. अभवत्—√ *bhū* 'to be' impf. 3rd. sing. ततः—'After coming into sphere of illusions' ( Mahidhara, Sāyana ), 'thence' ( Griffith, Macdonell ). विष्वङ्—'Assuming various forms of gods, men, birds etc' ( Mahidhara, Sāyaṇa ), 'all sides' ( Peterson, Griffith ), 'in all directions' ( Macdonell ). व्यक्रामत्—वि + √ *kram* 'to stride' impf. 3rd. sing. साशनानशने —What eats and what eats not i.e. animate and inanimate. This compd. representes the latest stage of Dvandvas in the Ṛv. the first member losing its accent and the final syllable of second member raceiving Udātta irrespective of its original accent.

ततो वि॒राड॑जायत वि॒राजो॒ अधि॒ पूरु॑षः ।
स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः ॥ ५ ॥

म० भा०—विष्वङ् व्यक्रामदिति यदुक्तं तदेव प्रपञ्च्यते। ततः तस्मादादिपुरुषात् विराट् ब्रह्माण्डदेहोऽजायत जातः। विविधं राजन्ते वस्तून्यत्रेति विराट्। विराजः अधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी एक एव पुमानजायत। सर्ववेदान्तवेद्यः परमात्मा स्वमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवदित्यर्थः। एतच्चाथर्वणोत्तरतापनीये स्पष्टमुक्तम्—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वात्र प्रविष्ट इव विहरति ( नृसिंहता. २. ९ ) इति। किं च स जातो विराट् पुरुषोऽत्यरिच्यत अतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज। पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि॥

शब्दा०—तस्मात् = उस चतुर्थांश से, विराट् = परम पुरुष से उत्पन्न प्रथम तत्त्व, अजायत = उत्पन्न हुआ, विराजः = विराट् नामक प्रथम तत्त्व से, अधि = बाद में, पुरुषः = जीवात्मा के रूप में पुरुष, सः = वह, जातः = उत्पन्न होते ही, अति अरिच्यत = (देव, मनुष्य आदि रूपों में विराट से) अलग कर लिया, पश्चात् = इसके बाद, भूमिम् = पृथिवी, अथो = इसके बाद, पुरः = जीवात्मा के लिए शरीर।

अन्वय—ततः विराट् अजायत, विराजः अधि पुरुषः (अजायत)। सः जातः (एव) अति अरिच्यत; पश्चात् भूमिम् अथो पुरः (ससर्ज)।

हि० अ०—उस (तीन-चतुर्थांश) से विराट् उत्पन्न हुआ; विराट् से (जीवात्मा के रूप में) पुरुष (उत्पन्न हुआ)। उत्पन्न होते ही उसने (अपने को देव, मनुष्य आदि रूप में विराट् से) अलग कर लिया। इसके बाद पृथिवी को (उत्पन्न किया); इसके बाद (जीवात्मा के लिए) शरीर (का निर्माण किया)।

*Trans.*—From him *Virāṭ* was born; from *Virāṭ* the Puruṣa (in the form of *Jīvātmā*). As soon as he was born, (he) separated himself (from *Virāṭ* in the forms of gods, men, lower animals etc.), then (he created) the earth and then the bodies.

*Notes*—विराट्—The first creation of the Perfect Being He was the intermediate between the primordial Puruṣa and the created Puruṣa. According to Muir विराट् may refer to the female counterpart of the Perfect Being as Aditi of Dakṣa. अजायत—√*ja* 'to be born', impf. Ātm. 3rd. sing. अरिच्यत—√*ric* 'to leave', pass. impf. 3rd. sing. अथो—(= अथ + उ); final ओ is Pragṛhya. पुरः—Body' (Mahidhara, Sāyaṇa), 'before' (Peterson, Macdonell), 'eastward' (Griffith). स···पुरः—This line has variously been interpreted : 'as soon as he was born, he separated himself in the forms of gods, men, lower aminal etc. from *Virāṭ*, then he (created) earth, and then body' (Sāyaṇa)

when born he stretched beyond the earth, behind and before' (Peterson, Macdonell), 'as soon as he was born, he spread eastward and westeward over the earth' ( Grtffith ).

तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूंस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥

म० भा०—सर्वं हूयते यस्मिन् स सर्वहुत् तस्मात्पुरुषमेधाख्यात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितम् । दध्याज्यादिभोग्यजातं संपादितमित्यर्थः । पुरुषेणेति शेषः । तथा स पुरुषः वायव्यान्वायुदेवताकान् तान् प्रसिद्धान् पशून् चक्रे उत्पादितवान् । 'अन्तरिक्षदेवत्याः खलु वै पशवः' इति श्रुतेः । अन्तरिक्षस्य च वायुदेवत्यत्वात्पशूनां वायुदेवत्वम् । तान् कान् । ये चारण्याः अरण्ये भवाः हरिणादयः । ये च ग्रामभवा गवाश्वादयस्तान् पशून् चक्रे ॥ ६ ॥

शब्दा०—तस्मात् = उस, यज्ञात् = यज्ञ से, सर्वहुतः = उस यज्ञ से जिसमें सर्वरूपात्मक पुरुष का हवन हुआ था, संभृतम् = इकट्ठा किया गया, पृषदाज्यम् = दधिमिश्रित घृत, पशून् = पशुओं को, तान् = उन, चक्रे = उत्पन्न किया, वायव्यान् = आकाश में रहनेवाले, आरण्या = जंगल में रहनेवाले ग्राम्याः = ग्रामों में रहनेवाले, च = और, ये = जो थे ।

अन्वय—तस्मात् सर्वहुतः यज्ञात् पृषदाज्यं संभृतम् । ( तस्मात् संभृतात् पृषदाज्यात् ) वायव्यान् आरण्या पशून् ये च ग्राम्याः तान् चक्रे ।

हि० अ०—उस सर्वहुत् यज्ञ से दधिमिश्रित घृत इकट्ठा किया गया । ( उससे एकत्रित दधिमिश्रित घृत से उस पुरुष ने ) आकाश में रहने वाले, जंगलों में रहने वाले तथा गांवों में रहने वाले जो पशु थे उनको उत्पन्न किया ।

***Trans.***—From that ***Sarvahut*** sacrifice the butter mixed with curd was gatherd up. He ( or It ) created these creatures of the air, of the forests, and those of the villages.

***Notes***—सर्वहुतः—'From the sacrifice in which omniformed Puruṣa was sacrificed' ( Sāyaṇa ), 'fully made' ( Peterson ), great' ( Griffith ), completely offered' (Macdonell). संभृतम्—√ *bhṛ* with सम् to gather, past part. ; here

it is used as a finite verb. पृषदाज्यम्—'Ghee mixed with curd' (Sāyaṇa), 'the mixture of curds and butter' (Wilson), 'the dripping fat' (Griffith) 'clotted butter' (Macdonell); Karmadhāraya compd. accented on the final syllable. चक्रे—√kṛ 'to make' Ātm. perf. 3rd sing. वायव्यान्—Final न् is not dropped because it is in the end of the pāda.

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥

म० भा०—सर्वहुतः तस्माद्यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नानि । छन्दांसि गायत्र्यादीनि जज्ञिरे तस्माद्यजुरप्यजायत । ऋग्यजुः सामभिश्छन्दोभिश्च विना यज्ञा न सिध्यन्ति ॥ ७ ॥

शब्दा०—तस्मात् = उस, यज्ञात् = यज्ञ से, सर्वहुतः = उस यज्ञ से जिसमें सर्वरूपात्मक पुरुष का हवन हुआ था, ऋचः = ऋचायें, सामानि = सामन्, जज्ञिरे = उत्पन्न हुये, छन्दांसि = गायत्र्यादि छन्द, जज्ञिरे = उत्पन्न हुये, तस्मात् = उससे, यजुः = यजुष्, तस्मात् = उससे, अजायत = उत्पन्न हुआ ।

अन्वय—तस्मात् सर्वहुतः यज्ञात् ऋचः सामानि जज्ञिरे; तस्मात् छन्दांसि जज्ञिरे; तस्मात् यजुः अजायत ।

*Trans.*—From that *Sarvahut* sacrifice were born the *Ṛks* and the *Sāmans*; from that were born the metres; from that were born the *yajus*.

*Notes*—जज्ञिरे—√*jan* 'to generate, Ātm. perf. 3rd. plu. छन्दांसि—'Metres, Gāyatī etc. (Sāyaṇa); Muir understands छन्दांसि to refer to the Atharvaveda. Peterson adheres to this view. अजायत—√*jā* to be born, impf. Ātm 3rd. sing.

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥

म० भा०—तस्माद्यज्ञात् अश्वाः अजायन्त उत्पन्नाः । तथा ये के चाश्वातिरिक्ता गर्दभादयोऽश्वतराश्च उभयादतः उभयोर्भागयोर्दन्ता येषां ते उभयदतः ।

छान्दसं दीर्घत्वम्। ऊर्ध्वोऽधोभागयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त। तथा ह स्फुटं तस्मात् गावः च जज्ञिरे। किं च तस्माद्यज्ञात् अजावयः अजाः अवयश्च जाताः। न हि पशुभिर्विना यज्ञः सिध्येत् ॥ ८ ॥

शब्दा०—तस्मात् = उस सर्वहुत् यज्ञ से, अश्वाः = घोड़े, अजायन्त = उत्पन्न हुये, ये = जो, के = कोई, च = और, उभयादतः = दोनों तरफ दांत वाले, गावः = गायें, ह = निश्चित अर्थ का वाचक निपात, जज्ञिरे = उत्पन्न हुईं, तस्मात् = उससे, जाताः = उत्पन्न हुईं, अजावयः = बकरियाँ तथा भेड़ें।

अन्वय—तस्मात् अश्वाः ये के च उभयादतः अजायन्त; तस्मात् ह गावः जज्ञिरे; तस्मात् अजावयः जाताः।

हि० अ०—उस (सर्वहुत् यज्ञ) से अश्व उत्पन्न हुये तथा वे सभी जो दोनों तरफ दांतवाले हैं। उससे गायें उत्पन्न हुईं; उससे बकरियां तथा भेड़ें (पैदा हुईं)।

*Trans.*—From that, horses were born, and all those that have two rows of teeth; from that cows were born; form that goats and sheep were born.

*Notes*—उभयादतः—Those who have two rows of teeth Bahuvrīhi compd accented on the first member. अजावयः—Goats and sheep; plural Dvandva compd.

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥

सा० भा०—यज्ञसाधने यज्ञशब्दः। यज्ञसाधनभूतं तं पुरुषं पशुत्वमाभाव्य यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः प्रोक्षणादिभिः संस्कारैः संस्कृतवन्तः। कीदृशम्। अग्रतः सृष्टेः पूर्वं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तं 'तस्माद्विराडजायत विराजो अधि पूरुष' इति। तेन पुरुषरूपेण पशुना देवा अयजन्त मानसयागं निष्पादितवन्तः। के ते देवा इत्यत्राह। ये साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः। ये च तदनुकूला ऋषयः मन्त्रद्रष्टारः ते सर्वेऽप्ययजन्त ॥ ९ ॥

शब्दार्थ—तम् = उस, यज्ञम् = यज्ञसाधनभूत, बर्हिषि = दूर्वा पर, प्र औक्षन् = जल से अभिषेक कराया, पुरुषम् = पुरुष को, जातम् =

उत्पन्न, अग्रत: = सब प्रथम, तेन = उससे, देवा: = देवताओं ने, अयजन्त = यज्ञ किया, साध्याः = प्रजापति आदि सृष्टिकर्ताओं ने, ऋषयः = ऋषियों ने च = और, ये = जो।

अन्वय—तम् अग्रतः जातं यज्ञं पुरुषं ( देवाः ) बर्हिषि प्र औक्षन्। देवाः साध्याः ये ऋषयश्च आसन् ( ते सर्वे ) तेन ( पुरुषेण ) अयजन्त।

हि० अ०—उस सबसे पहले उत्पन्न यज्ञ के साधनभूत पुरुष ( पशु ) को देवताओं ने पवित्र दूर्वा पर ( रखकर ) प्रोक्षण किया। ( पुरुष पशु ) से देवताओं ने, प्रजापति आदि सृष्टिकर्ताओं ने, तथा जो ऋषि थे उन्होंने यज्ञ सम्पादित किया।

***Trans.***—They besprinkled the first-born Puruṣa as to be sacrificed, on the sacred grass. Therewith the gods, the Sādhyas and the seers that are, all performed the sacrifice.

***Notes***—यज्ञम्—***yaj*** 'to sarifice' gerundive in य. अयजन्त—√***yaj*** 'to sacrifice,' impf. 3rd. Atm. plu. साध्याः—'A class of sacrificial beings probably ancient divine sacrificers' ( Griffith ) ; 'divine beings including Prajāpati etc. who are capable of creation' ( Sāyaṇa ). Macdonell thinks it to be in apposition to देवाः.

यत्पुरु॑षं॒ व्य॑द॑धुः॒ कति॒धा व्य॑कल्पयन्।
मुखं॒ किम॑स्या॒सी॒त्किं बा॒हू किमू॒रू पादा॑ उच्येते ॥ १० ॥

स० भा०—प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवा यत् यदा पुरुषं व्यदधुः कालेनोदपादयन् तदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः। अस्य पुरुषस्य मुखं किमासीत् किं बाहू ऊरू चास्ताम्। किं च पादौ उच्येते पादावपि किमास्तामित्यर्थः ॥१०॥

शब्दा०—यत् = जब, पुरुषम् = परम पुरुष को, वि अदधुः = विभक्त किया, कतिधा = कितने भागों में, वि अकल्पयन् = विभाजन किया, मुखम् = मुख, किम् = क्या था, अस्य = उसका, आसीत् = था, किम् = क्या, बाहू = दो भुजायें, किम् = क्या, ऊरू = दोनों जंघायें, पादौ = दोनों पैर, उच्येते = कहे जाते हैं।

अन्वय—( देवाः ) यत् पुरुषं वि अदधुः कतिधा वि अकल्पयन् ? अस्य मुखं किम् आसीत् किं बाहू ? किम् ऊरू ? ( किं ) पादौ उच्येते ?

हि० अ०—जब ( देवताओं ने ) पुरुष को विभक्त किया ( उस समय उसके ) कितने भाग किये ? उसका मुख क्या था ? ( उसकी ) दोनों भुजायें क्या थीं ? ( उसकी ) दोनों जंघायें क्या थीं ? ( उसके ) दोनों पैर क्या कहे जाते हैं ?

*Trans.*—When they divided the Perfect Being, into how many parts did they make ? What was his mouth ? What the two arms ? What the two thighs and what are said his two feet ?

*Notes*—व्यदधुः—√*dhā* 'to put', impf. 3rd. plu. ; not unaccented because preceded by यत्. अकल्पयन्—√*klp* 'to make', impf. 3rd. plu. आसीत्—√*as* 'to be', impf. 3rd. sing. उच्येते—√*vac* 'to speak', pres. 3rd. dual ; final ए as dual is Pragṛhya.

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ ११ ॥

स० भा०—पूर्वोक्तप्रश्नोत्तराण्याह । ब्राह्मणः ब्रह्मत्वजातिविशिष्टः पुरुषोऽस्य प्रजापतेर्मुखमासीत् । मुखादुत्पन्न इत्यर्थः । राजन्यः क्षत्रियत्वजातिविशिष्टः बाहू कृतः बाहुत्वेन निष्पादितः । तत् तदानीमस्य प्रजापतेः यत् यावूरू तद्रूपो वैश्यः संपन्नः । ऊरुभ्यामुत्पादित इत्यर्थः । तथास्य पद्भ्यां शूद्रत्वजातिमान्पुरुषोऽजायत उत्पन्नः ॥ ११ ॥

शब्दा०—ब्राह्मणः = ब्राह्मण, अस्य = उसका, मुखम् = मुख, आसीत् = था, बाहू = दोनों भुजाओं से, राजन्यः = क्षत्रिय, कृतः = बना, ऊरू = दोनों जंघायें, तत् = उनसे, उसकी यत् = जो थीं, वैश्यः = वैश्य, पद्भ्याम् = दोनों पैरों से, शूद्रः = शूद्र, अजायत = उत्पन्न हुआ ।

अन्वय—अस्य मुखं ब्राह्मणः आसीत्, राजन्यः बाहू कृतः; यत् वैश्यः तत् अस्य ऊरू; शूद्रः पद्भ्याम् अजायत ।

हि० अ०—ब्राह्मण उसका मुख था, दोनों भुजाओं से क्षत्रिय हुआ; उसकी जो जंघायें थीं उनसे वैश्य हुआ; ( उसके ) दोनों पैरों से शूद्र उत्पन्न हुआ ।

*Trans.*—Brāhmaṇa was his mouth; Kṣatriya was made of his two arms; then his two thighs became Vaiśva: from feet Śudra was born.

*Notes*—ब्राह्मणोऽस्य—In Abhinihita sandhi the combination of the preceding Udātta and the following Anudātta results into Svarita, which is called अभिनिहितस्वरित. For marking see भाव्यम् (YV. XXXI. 2) कृतः—√kṛ 'to make' + क्त, here it is used as a finite verb. 'The Brāhmaṇa is called the mouth of Puruṣa as having the special privilege, as a priest, of addressing the gods in prayer. The arms of Puruṣa became the Rājanya, the prince and soldier who wields the sword and spear. His thighs, the strongest parts of his body, became the agriculturist and tradesman, the chief support of society; and his feet, the emblems of vigour and activity, became the Sūdra or labouring man on whose toil and industry all ultimately rests. This is the only passage in the Ṛgveda, which enumerates the four castes. (Griffith on Ṛv. X. 90.12. f.n.).

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।

श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥

म० भा०—यथा दध्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह । मनसः सकाशाच्चन्द्रमाः जातः । चक्षोः चक्षुषः सकाशात्सूर्यः अजायत । वायुः प्राणश्च श्रोत्रात् कर्णादजायत । मुखादग्निरजायत ॥ १२ ॥

शब्दा०—चन्द्रमाः = चन्द्रमा, मनसः = मन से, जातः = उत्पन्न हुआ, चक्षोः = आँख से, सूर्यः = सूर्य, अजायत = उत्पन्न हुआ, श्रोत्रात् = कान से, वायुः = वायु, च = और, प्राणः = प्राण, च = और, मुखात् = मुख से, अग्निः = अग्नि, अजायत = उत्पन्न हुआ ।

अन्वय—( अस्य ) मनसः चन्द्रमा जातः; चक्षोः सूर्यः अजायत; श्रोत्राद् वायुश्च प्राणश्च, मुखाद् अग्निः अजायत ।

हि० अ०—( उस पुरुष के ) मन से चन्द्रमा उत्पन्न हुआ; ( उसकी ) आँख से सूर्य उत्पन्न हुआ । कान से वायु तथा प्राण, और मुख से अग्नि उत्पन्न हुआ ।

*Trans.*—The moon was born from ( his ) mind; from ( his ) eye the sun was born. From ( his ) ear the wind and breath and from mouth Agni was born.

*Notes*—The second hemistich slightly differs from the text of the Ṛv. ( cf. मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत—Ṛv. X 90.13 ).

नाभ्या आसीदन्तरिक्षᳪ शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२॥ अकल्पयन् ॥ १३ ॥

स० भा०—यथा प्रजापतेर्मनःप्रभृतयश्चन्द्रादीनकल्पयन् तथान्तरिक्षादिलोकानित्याह नाभ्येति । प्रजापतेः नाभेः सकाशात् अन्तरिक्षमासीत् । शीर्ष्णः शिरसः द्यौः स्वर्गः समवर्ततोत्पन्ना । अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना । श्रोत्राद्दिशः उत्पन्नाः । तथा तेनोक्तेन विधिना लोकान्भूरादीन् प्रजापतेः सकाशादकल्पयन् कल्पितवन्तः । फलादानोत्सुकाः काला इति शेषः ॥ १३ ॥

शब्दा०—नाभ्याः = नाभी से, आसीत् = उत्पन्न हुआ था, अन्तरिक्षम् = अन्तरिक्ष लोक, शीर्ष्णः = शिर से, द्यौः = द्युलोक, समवर्तत = उत्पन्न हुआ, पद्भ्याम् = दोनों पैरों से, भूमिः = पृथिवी, दिशः = दिशायें, श्रोत्रात् = कान से, तथा = इसी प्रकार, लोकान् = लोकों की, अकल्पयन् = सृष्टि की ।

अन्वय—नाभ्याः अन्तरिक्षम् आसीत्, शीर्ष्णः द्यौ सम् अवर्तत, पद्भ्यां भूमिः, श्रोत्रात् दिशः तथा लोकान् अकल्पयन् ।

हि० अ०—( उसकी ) नाभी से अन्तरिक्ष ( उत्पन्न हुआ ) था; शिर से आकाश उत्पन्न हुआ; दोनों पैरों से पृथिवी, कान से दिशायें । इसी प्रकार सभी लोकों की सृष्टि ( देवताओं ने ) की ।

*Trans.*—From ( his ) navel was ( produced ) the middle region; from ( his ) head was evolved the sky; from

(his) two feet the earth; the quarters from (his) ear. Thus they made the worlds.

*Notes*—समवर्तत—√*vṛt* with सम् 'to produce,' impf. Atm. 3rd. sing. लोकाँ अकल्पयन्—√*klp* 'to make' impf. 3rd. plu. Find न् preceded by आ, ऊ, ई and followed by a vowel becomes अनुस्वार which is called रंग. It requires double time to be pronounced. The Śaiśirega Śikṣā says :— स्वराः कम्पाश्च रंगाश्च ये यत्कालाः स्वभावतः। वर्धन्ते प्रोच्यमानास्ते क्षिप्रयत्नेऽपि वक्तरि ॥

यत्पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत ।
व॒स॒न्तो॑ऽस्यासी॒दाज्यं॑ ग्री॒ष्म इ॒ध्मः श॒रद्ध॒विः ॥ १४ ॥

स० भा०—यत् यदा पूर्वोक्तक्रमेण देवशरीरेषु सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतातनिषत तदानीमस्य यज्ञस्य वसन्तः ऋतुरेवाज्यमासीत्। आज्यत्वेन संकल्पितवन्त इत्यर्थः। एवं ग्रीष्मः इध्मः आसीत्। ग्रीष्ममेवेध्मत्वेन संकल्पितवन्तः। तथा शरत् हविः आसीत्। शरदमेव पुरोडाशादिहविष्ट्वेन संकल्पितवन्तः। पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यम्। अत्र कण्डिकाव्युत्क्रमोऽस्ति अस्यानन्तरं तं यज्ञम् (९) ततः तस्माद्यज्ञादिति (६) तिस्रः क्रमेणैव। ततः सप्तास्यासन्निति (१५) क्रमोऽपेक्षितः ॥ १४ ॥

शब्दा०—यत् = जब, पुरुषेण = पुरुष रूप, हविषा = हवि से, देवाः = देवताओं ने, यज्ञम् = यज्ञ को, अतन्वत = सम्पन्न किया, वसन्तः = वसन्त ऋतु, अस्य = उसका, आसीत् = था, आज्यम् = घी, ग्रीष्मः = ग्रीष्म ऋतु, इध्मः = इन्धन, शरत् = शरद् ऋतु, हविः = हवि।

अन्वय—देवाः यत् पुरुषेण यज्ञम् अतन्वत, अस्य आज्यं वसन्तः इध्मः ग्रीष्मः, हविः शरद् आसीत्।

हि० अ०—देवताओं ने जब पुरुष रूपी हवि से यज्ञ किया, (उस समय) वसन्त उस (यज्ञ) का घी था, ग्रीष्म इसका इन्धन था और शरत् इसका हवि था।

***Trans.***—When gods performed a sacrifice with the Perfect Being as its oblation, the spring was its ghee, the summer its fuel and the autumn its oblation.

***Notes***—यज्ञम्—According to Sāyaṇa, the sacrifice performed by gods with the Perfect Being as its oblation, spring as its ghee, summer as its fuel, autumn as its oblation, was a mental one. अतन्वत—√ *tan* 'to stretch' impf. Ātm. 3rd. plu.; not unaccented because preceded by यत्. आसीत्—√ *as* 'to be', impf. 3rd. sing.

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥

म० भा०—यत् यदा देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वं ( १४ ) 'पुरुषेण हविषा' इत्युक्तम् । तदा संकल्पितस्य यज्ञस्य सप्त गायत्र्यादीनि छन्दांसि परिधयः आसन् ऐष्टिकस्याहवनीयस्य त्रयः परिधय औत्तरवेदिकाः त्रयः आदित्यः सप्तमः परिधिः प्रतिनिधिरूपः । तथा च श्रुतिः 'गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोति' इति । तत एते आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः । त्रिःसप्त त्रिगुणाः सप्त एकविंशतिसंख्याकाः समिधः कृताः । 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्यः' एते एकविंशतिरेकविंशतिदारुयुक्तेध्मत्वेन भाविताः । यद्वा सप्त समुद्राः क्षीरोदादयोऽस्य यज्ञस्य परिधयः आसन् । भारतखण्डे यागा भवन्तीति समुद्राणां परिधित्वम् । त्रिः त्रिगुणः सप्त छन्दोवर्गाः समिधः कृताः गायत्र्यादीनि सप्त अतिजगत्यादीनि सप्त कृत्यादीनि सप्तेति ॥ १५ ॥

शब्दा०—सप्त = सात, अस्य = उसकी, आसन् = थी, परिधयः = परिधियाँ, त्रिःसप्त = इक्कीस, समिधः = समिधायें, कृताः = बनाई गई थीं, देवाः = देवताओं ने, यत् = जिस समय, यज्ञम = यज्ञ, तन्वानाः = सम्पन्न करते हुये, अबध्नन् = बांधा था, पुरुषम् = परम पुरुष को, पशुम् = पशु के रूप में ।

अन्वय—अस्य सप्त परिधयः आसन् त्रिःसप्त समिधः कृताः यत् यज्ञं तन्वानाः देवाः पुरुषं पशुम् अबध्नन् ।

हि० अ०—उसकी सात परिधियां थीं; इक्कीस समिधायें बनाई गई थीं, जिस समय यज्ञ करते हुये देवताओं ने पुरुष-पशु को बाँधा था।

*Trans.*—Seven were his enclosing (sticks) twenty one were made (his) fuel, when the gods, performing the sacrifice, bound the Perfect Being as a victim.

*Notes*—सप्त परिधयः–According to Sāyaṇa, seven fencing sticks here refer to seven metres, Gāyatrī, etc. Mahīdhara understands the seven fencing sticks as seven oceans. Macdonell takes the seven number as a sacred one. According to him, there are only three green sticks put around the sacrificial fire to fence it in. कृताः—√*kṛ* 'to make,' past part. used as finite verb. तन्वानाः—√*tan* 'to stretch' + शानच्; nom. plu. अबध्नन्—√ *badh* 'to bind' impf. 3rd. plu. ; not unaccented because begins the pāda.

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ १६॥

म० भा०—पूर्वप्रपञ्चेनोक्तमर्थं संक्षिप्याह। देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञेन यज्ञं यज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः। तस्मात् पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि भूतानि आसन्। एतावता सृष्टिप्रतिपादकसूक्तभागार्थ उक्तः। अथोपासनतत्फलानुवादकभागार्थः संगृह्यते। तत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाः विराडुपाधिसाधकाः देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ह एव ते महिमानः तदुपासका महात्मानः सचन्त सचन्ते समवयन्ति प्राप्नुवन्ति। अडभाव आर्षः। सृष्टेः प्रवाहनित्यतां दर्शयति। तदुक्तम्—'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति॥ १६॥

शब्दा०—यज्ञेन = यज्ञ से, यज्ञम् = यज्ञ पुरुष का, अयजन्त = पूजन किया, देवाः = देवताओं ने, तानि = वे ही, धर्माणि = धर्म, प्रथमानि = सर्व प्रथम, आसन् = थे, ते = उनलोगों ने, ह = निश्चित अर्थ का वाचक एक निपात, नाकम् = स्वर्ग, महिमानः = पूजनेवाले, सचन्त = प्राप्त किये, यत्र

=जहां पर, पूर्वे=पुराने, साध्याः=प्रजापति आदि सृष्टि कर्ताओं का वर्ग, सन्ति=वास करते हैं, देवाः=देवता।

अन्वय—देवाः यज्ञेन यज्ञम् अयजन्त। तानि प्रथमानि धर्माणि आसन्। ते ह महिमानः नाकं सचन्त यत्र पूर्वे साध्याः देवाः (च) सन्ति।

हि० अ०—यज्ञ से देवताओं ने यज्ञ पुरुष का पूजन किया; वे ही सर्व प्रथम धर्म थे। पूजनवाले स्वर्ग को प्राप्त किये जहाँ पर सृष्टि करने में समर्थ प्रजापति आदि पुराने देवताओं का वर्ग तथा देवगण निवास करते हैं।

*Trans.*—With the sacrifice gods worshipped the Puruṣa. These were the first ordinances. Those mighty ones attained the heaven where the ancient Sādhyas and gods are dwelling.

***Notes***—अयजन्त—√*yaj* 'to sacrifice', Atm. impf. 3rd. plu. आसन्—√ *as* 'to be' impf. 3rd. plu. सचन्त—√ *sac* 'to accompany', impf. 3rd. plu. not augmented.

No. 17 XXXIV. 1-6.

# ŚIVA-SAṀKALPA

अनारभ्याधीतोऽध्यायः आ जितृमेधात् आदित्ययाज्ञवल्क्यदृष्टा मन्त्राः पाठे विनियुक्ताः । षडृचस्त्रिष्टुभो मनोदेवत्याः शिवसंकल्पदृष्टाः ।

यज्जाग्रतो दूरमुदैति दैवं
तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं
तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥

स० भा०—ऋषिर्वदति । तन्मे मनः शिवसंकल्पमस्तु शिवः कल्याणकारी धर्मविषयः संकल्पो यस्य तत् तादृशं भवतु । मन्मनसि सदा धर्म एव भवतु न कदाचित्पापमित्यर्थः । तत्किम् । यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः । यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा तत्र भवं दैवमात्मग्राहकमित्यर्थः । 'मनसैवाद्रष्टव्यमेतदप्रमेयं ध्रुवम्' इति श्रुतेः । तत् उ । यदः स्थाने तच्छब्दः उकारश्चार्थः । यच्च मनः सुप्तस्य पुंसः तथैव इति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्तावस्थायां पुनरागच्छति । यच्च दूरंगमं दूरात् गच्छतीति दूरंगमम् खच्प्रत्ययः । अतीतानागतवर्तमानविप्रकृष्टव्यवहितपदार्थानां ग्राहकमित्यर्थः । यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः । प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते । आत्मा मनसा संयुज्यते मनः इन्द्रियेणेन्द्रियमर्थेनेति न्यायोक्तेर्मनःसंबन्धमन्तरा तेषामप्रवृत्तेः । तादृशं मे मनः शान्तसंकल्पमस्तु ॥

शब्दा०—यत् = जो मन, जाग्रतः = जागते हुए मनुष्य का, दूरम् = दूर उदैति = जाता है, दैवम् = आत्मदर्शन करने वाला, तत् = जो, उ = और, सुप्तस्य = सोये हुए मनुष्य का, तथा = उसी प्रकार, एव = ही, एति = लौट आता है, दूरंगमम् = दूर जानेवाला अर्थात् अतीत, अनागत, वर्तमान सब पदार्थों को जाननेवाला, ज्योतिषाम् = श्रोत्रादि ज्ञानेन्द्रियों का, ज्योतिः = प्रकाश, एकम् = एकमात्र, तत् = वह, मे = मेरा, मनः = मन, शिव-संकल्पम् = मंगलकारक संकल्पवाला, अस्तु = होवे।

अन्वय—यत् ( मनः ) जाग्रतः दूरम् उद् आ एति, यत् दैवम्, तत् (= यत् ) उ सुप्त + य तथा एव एति, यत् दूरंगमम्, यत् ज्योतिषाम् एकं ज्योतिः, तत् मे मनः शिवसंकल्पम् अस्तु ।

हि० अ०—जो मन पुरुष की जाग्रत अवस्था में ( नेत्र आदि अन्य ज्ञानेन्द्रियों की अपेक्षा ) अधिक दूर जाता है, ( जो ) आत्मा का दर्शन करने वाला है, जो ( पुरुष की ) सुषुप्ति अवस्था में उसी प्रकार लौट आता है ( जिस प्रकार जाग्रत अवस्था में दूर जाता है ) ( जो ) दूर जानेवाला है, और जो सब बाह्य इन्द्रियों का एकमात्र प्रकाशक है, वह मेरा मन शुभ संकल्पवाला हो ।

*Trans.*—May that mind of mine, which goes farther off (than other sense organs like eye etc. ) when one is sleeping, which alone is the perceiver of the soul, which comes back in the same way ( in which it goes away when one is sleeping ), ( which is ) far-going and which is the sole light of all external organs, be of auspicious resolution.

*Notes*—जाग्रतः—Gen. sing or जाग्रत् from √ jāgṛ 'to wake up' + शतृ. उदैति—उत् + आ + √ इ 'to go' pres. 3rd. sing. ; not unaccented because preceded by यत्. तत्—It is used in the sense of यत्.

येन॒ कर्मा॑ण्य॒पसो॑ मनी॒षिणो॑
य॒ज्ञे कृ॒ण्वन्ति॑ वि॒दथे॑षु॒ धीराः॑ ।
यद॑पू॒र्वं य॒क्षम॒न्तः प्र॒जानां॒
तन्मे॒ मनः॑ शि॒वसं॑कल्पमस्तु ॥ २ ॥

भ० भा०—मनीषिणः मेधाविनः यज्ञे येन मनसा सता कर्माणि कृण्वन्ति कुर्वन्ति 'कृ करणे' स्वादिः । मनःस्वास्थ्यं विना कर्माप्रवृत्तेः । केषु सत्सु । विदथेषु ज्ञानेषु सत्सु विद्यन्ते ज्ञायन्ते तानि विदथानि तेषु । वेत्तेरौणादिकोऽथप्रत्ययः प्रत्ययोदात्तत्वेन मध्योदात्तं पदम् 'प्रत्ययः प[रश्च] आद्युदात्तश्च' (पा० सू० ३.१.१-३) इति पाणिन्युक्तेः यज्ञसंबन्धिनां हविरादिपदार्थानां ज्ञानेषु उत्पन्नेष्वित्यर्थः । कीदृशा मनीषिणः । अपसः अप इति कर्मनाम ( निघ० २. १. १ ) अपो विद्यते येषां

ते अपस्विनः कर्मवन्तः 'अस्मायामेधास्रजो विनिः' (पा सू० ५. २. १२१) इति विन्प्रत्ययः 'विन्मतोर्लुक्' इतीष्ठभावेऽपि छान्दसो विनो लुक् (पा० सू० ५. ३. ६५) सदा कर्मनिष्ठा इत्यर्थः। तथा धीराः धीमन्तः धीर्विद्यते येषां ते धीराः कर्मण्यण् (पा० सू० ३. २. १)। यच्च मनः अपूर्वम् न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः। यद्वा अपूर्वमनपरमनाह्यमित्युक्तेरपूर्वमात्मरूपमित्यर्थः। यच्च यक्षं यष्टुं शक्तं यज्ञम्। यजतेरौणादिकः सेन्प्रत्ययः 'ञ्नित्यादिर्नित्यम्' (पा० सू० ६. १. १७) इत्याद्युदात्तं पदम्। यच्च प्रजायन्ते इति प्रजास्तासा प्राणिमात्राणामन्तः शरीरमध्ये आस्ते इतरेन्द्रियाणि बहिःष्ठानि मनस्त्वन्तरिन्द्रियमित्यर्थः। तत् तादृशं मे मनः शिवसंकल्पमस्त्विति व्याख्यातम् ॥

शब्दा०—येन = जिस मन से, कर्माणि = काम, अपसः = कर्मनिष्ठ, काम करने की आदतवाले मनुष्य, मनीषिणः = मेधावी पुरुष, यज्ञे = यज्ञ में, कृण्वन्ति = करते हैं, विद्थेषु = ज्ञान होने पर, धीराः = बुद्धिमान् पुरुष, यत् = जो मन, अपूर्वम् = जिसके पहिले कोई इन्द्रिय नहीं होती अर्थात् सब इन्द्रियों से पहिले उत्पन्न, यक्षम् = यज्ञ करने में समर्थ, अथवा सब इन्द्रियों से पहिले उत्पन्न होने कारण पूज्य, अन्तः = शरीर के भीतर, प्रजानाम् = प्रजा के, प्राणिमात्र के, तत् = वह, मे = मेरा, मनः = मन, शिवसंकल्पम् = शुभ संकल्पवाला, अस्तु = हो।

अन्वय—येन (मनसा) अपसः धीराः मनीषिणः यज्ञे विदथेषु (च) कर्माणि कृण्वन्ति, यत् अपूर्वम्, (यत्) यक्षम्, (यत्) प्रजानाम् अन्तः, तत् मे मनः शिवसंकल्पम् अस्तु।

हि० अ०—जिस मन से कर्मनिष्ठ बुद्धिमान् मेधावी पुरुष यज्ञ में तथा पूजाओं में कर्म करते हैं, जो सब से पहिले उत्पन्न होता है और यज्ञ करने में समर्थ है, और जो प्राणिमात्र के भीतर रहता है, वह मेरा मन शुभ संकल्पवाला हो।

*Trans.*—May that mind of mine through which resolute and intelligent men, devoted to the performance of religious rights, do their work in sacrifice and worships which is unpreceded, capable of performing sacrifices, and (which is) present in all living beings, be of auspicious resolution.

*Notes*—अपसः—The word अपस् being accented on the suffix is an adj. of मनीषिणः when it bears the accent on the root it is action noun meaning 'work'. कृण्वति—√ kṛ 'to make' pres. 3rd. plu, ; not unaccented because preceded by येन. अन्तः—Here visarga is rhotacized one. विदथेषु—विदथ means worship or the plau of worship. Here Mahidhara takes it to mean 'on knowing the oblations etc.'

यत्प्रज्ञानमुत चेतो धृतिश्च
यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किं चन कर्म क्रियते
तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥

स० भा०—यत् मनः प्रज्ञानं विशेषेण ज्ञानजनकम् प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् । 'करणाधिकरणयोश्च' ( पा० सू० ३. ३. ११७ ) इति करणे ल्युट्-प्रत्ययः । उत अपि यत् मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः । 'चिती संज्ञाने' अस्मात् ण्यन्तादसुन्प्रत्ययः । सामान्यविशेषज्ञानजनकमित्यर्थः । यच्च मनो धृतिर्धैर्यरूपम् । मनस्येव धैर्योत्पत्तेर्मनसि धैर्यमुपचर्यते कार्यकारणयोरभेदात् । यच्च मनः प्रजासु जनेषु अन्तर्वर्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम् । उक्तमपि पुनरुच्यते आदरार्थम् । 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १.४२ ) इति यास्कोक्तेः । यच्चामृतममरणधर्मि आत्मरूपत्वात् । यस्मान्मनसः ऋते यन्मनो विना किंचन किमपि कर्म न क्रियते जनैः । सर्वकर्मसु प्राणिनां मनःपूर्वं प्रवृत्तेर्मनःस्वास्थ्यं विना कर्माभावादित्यर्थः । 'अन्यारादितरर्ते' ( पा० सू० २. .२९ ) इत्यादिना यस्मादिति ऋतेयोगे पञ्चमी । तन्मे मन इति व्याख्यातम् ॥

शब्दा०—यत् = जो मन, प्रज्ञानम् = विशेष ज्ञान का साधन, उत = और, चेतः = सामान्य ज्ञान करानेवाला, धृतिः = धैर्यरूप, च = और, यत् = जो, ज्योतिः = प्रकाशक, अन्तः = भीतर, अमृतम् = अमर, प्रजासु = प्राणियों में, यस्मात् = जिससे, न = नहीं, ऋते = बिना, किम् = कुछ, चन = भी, कर्म = काम, क्रियते = किया जाता है, तत् = वह, मे = मेरा, मनः = मन, शिवसंकल्पम् = शुभ संकल्पवाला, अस्तु = हो ।

अन्वय—यत् ( मनः ) प्रज्ञानम्, उत चेतः, धृतिः च; यत् प्रजासु अन्तः अमृतं ज्योतिः ( अस्ति ), यस्मात् ऋते किं चन कर्म न क्रियते, तत् मे मनः शिवसंकल्पम् अस्तु ।

हि० अ०—जो मन विशेष ज्ञान और सामान्य ज्ञान ( का साधन ) है, जो धैर्य-रूप है, जो प्राणियों के भीतर अमर ज्योति है, और जिसके बिना कोई काम नहीं किया जा सकता, वह मेरा मन शुभ संकल्पवाला हो ।

*Trans.*—May that mind of mine, which is the instrument of gaining special and general knowledge, which is steadiness itself, which is the immortal light in living beings and without which no work is done, be of auspecious resolution.

*Notes*—क्रियते—√*kṛ* 'to make' passive, Atm. pres. 3rd. Sing. ; not unaccented because preceded by यस्मात्.

येनेदं भूतं भुवनं भविष्य-
त्परि गृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता
तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥

म० भा०—येन मनसा इदं सर्वं परिगृहीतम् परितः सर्वतो ज्ञातम् । इदं किंभूतम् । भूतकालसंबन्धि वस्तु । भुवनं भवतीति भुवनम् । भवतेः क्यु-प्रत्ययः वर्तमानकालसंबन्धि । भविष्यत् 'लृटः सद्वा' ( पा० सू० ३.३.१४ ) इति शतृप्रत्ययः 'तौ सत्' ( पा० सू० ३.२.१२७ ) इत्युक्तेः त्रिकालसंबद्धवस्तुषु मनः प्रवर्तत इत्यर्थः । श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति । कीदृशेन येन । अमृतेन शाश्वतेन । मुक्तिपर्यन्तं श्रोत्रादीनि नश्यन्ति मनस्त्वनश्वरमित्यर्थः । येन च मनसा यज्ञोऽग्निष्टोमादिः तायते विस्तार्यते । 'तनोतेर्यकि' ( पा० सू० ६.४.४४ ) इत्याकारः । कीदृशो यज्ञः । सप्तहोता सप्तहोतारो देवानामाह्वातारो होतृ-मैत्रावरुणादयो यत्र स सप्तहोता । अग्निष्टोमे सप्तहोतारो भवन्ति । तन्मे मन इति व्याख्यातम् ।

शब्दा०—येन = जिस मन के द्वारा, इदम् = यह, भूतम् = भूतकाल का, भुवनम् = वर्तमान काल का, भविष्यत् = भविष्यत् काल का, परिगृहीतम् =

जाना जाता है, अमृतेन = अमर मन के द्वारा, सर्वम् = संसार का सब वस्तु-जात, येन = जिस मन के द्वारा, यज्ञः = यज्ञ, तायते = किया जाता है, सप्त-होता = सात होतावाला अग्निष्टोम, तत् = वह, मे = मेरा, मनः = मन, शिवसंकल्पम् = शुभ संकल्पवाला, अस्तु = हो।

अन्वय—येन अमृतेन ( मनसा ) इदं भूतं भुवनं भविष्यत् सर्वं परिगृहीतम्; येन सप्तहोता यज्ञः तायते; तत् मे मनः शिवसंकल्पम् अस्तु।

हि० अ०—जिस अमर ( मन ) के द्वारा इस संसार में भूत, भविष्यत् और वर्तमान काल के सब पदार्थ जाने जाते हैं, और जिसके द्वारा सात होतावाला ( अग्निष्टोम ) यज्ञ किया जाता है, वह मेरा मन शुभ संकल्पवाला हो।

*Trans.*—May that mind of mine, which is immortal, by which every thing is known in this world in present, past and future, and by which the ( Agniṣṭoma ) sacrifice, presided over by seven priests, is performed, be of auspicious resolution.

*Notes.*—परिगृहीतम्—परि + √*grah* 'to seize' + क्त. तायते—√*tan* to stretch + यक्; 'अ' in initial 'त' of the root is lengthened ( 'तनोतेर्यकि' Pāṇ. VI.4.44. ) ; passive, Ātm, pres. 3rd. sing.

यस्मिन्नृचः साम यजूꣳषि यस्मि-
न्प्रतिष्ठिता रथनाभाविवाराः।
यस्मिꣳश्चित्तꣳसर्वमोतं प्रजानां
तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥

म० भा०—यस्मिन् मनसि ऋचः प्रतिष्ठिताः। यस्मिन् साम सामानि प्रतिष्ठितानि। यस्मिन् यजूंषि प्रतिष्ठितानि। मनसः स्वास्थ्ये एव वेदत्रयी-स्फूर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम् 'अन्नमयं हि सोम्य मनः' इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता। तत्र दृष्टान्तः। रथनाभौ आराः इव। यथा आराः रथचक्रनाभौ मध्ये प्रतिष्ठितास्तद्वच्छब्दजालं मनसि। किंच प्रजानां सर्वं चित्तं ज्ञानम् सर्वपदार्थविषयिज्ञानं यस्मिन् मनसि ओतं प्रोतं निक्षिप्तं तन्तुसन्ततिः पटे इव सर्वं ज्ञानं मनसि निहितम्। मनःस्वास्थ्ये एव

ज्ञानोत्पत्तिर्मनोवैयग्र्ये च ज्ञानाभावः। तन्मे मम मनः शिवसंकल्पं शान्तव्यापारमस्तु ॥

शब्दा०—यस्मिन् = जिस मन में, ऋचः = ऋचाएँ, साम = सामगान, यजूंषि = यजुष्, यस्मिन् = जिस में, प्रतिष्ठिताः = प्रतिष्ठित हैं, रथनाभौ = रथचक्र की नाभी में, इव = समान, अराः = तिल्लियाँ, यस्मिन् = जिसमें, चित्तम् = ज्ञान, सर्वम् = सर्वपदार्थविषयक, ओतम् = व्याप्त है, प्रजानाम् = प्रजाओं का, तत् = वह, मे = मेरा, मनः = मन, शिवसंकल्पम् = शुभ संकल्पवाला, अस्तु = हो।

अन्वय—यस्मिन् (मनसि) ऋचः, साम यजूंषि रथनाभौ आराः इव प्रतिष्ठिताः; यस्मिन् प्रजानां सर्वं चित्तम् ओतम्, तत् मे मनः शिवसंकल्पम् अस्तु।

हि० अ०—रथचक्र की नाभी में तिल्लियों की तरह जिस मन में ऋचाएँ, साम और यजुष प्रतिष्ठित होते हैं, जिसमें प्राणियों का सर्व पदार्थविषयक ज्ञान निहित है, वह मेरा मन शुभ संकल्पवाला हो।

*Trans.*—May that mind of mine, in which the Ṛks, the Sāmans and the yajuṣ are set up like the spokes in the nave of a wheel and in which all knowledge of living beings is woven, be of auspicious resolution.

*Notes*—प्रतिष्ठिता—प्रति + √*sthā* 'to stand' + क्त; neut. nom. plu. termination नि has been dropped. रथनाभाविवाराः—Here simile has been given to explain the relation of mind with Ṛks etc. यस्मिन् चित्तम् From this and the previous verses it appears that the Nyāya theory of knowledge is acceptable to the white Yajurveda. According to this theory, all knowledge passes to the mind through sense organs, and from there to the soul. ओतम्—आ + √*av* 'to go' + क्त. व् with penultimate vowel has changed in to उ by samprasāraṇa.

सुषारथिरश्वानिव यन्मनुष्या-
न्नेनीयतेऽभीशुभिर्वाजिन इव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं
तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

म० भा०—यत् मनो मनुष्यान्नरान्नेनीयते अत्यर्थमितस्ततो नयति। नयतेः क्रियासमभिहारे यङ्। मनःप्रेरिता एव प्राणिनः प्रवर्तन्ते। मनुष्यग्रहणं प्राणिमात्रोपलक्षकम्। तत्र दृष्टान्तः। सुसारथिः अश्वानिव शोभनः सारथिर्यन्ता यथा कशया अश्वान् नेनीयते। द्वितीयो दृष्टान्तः। अभीशुभिर्वाजिन इव यथा सुसारथिरभीशुभिः प्रग्रहैः वाजिनोऽश्वान्नेनीयत इत्यनुषङ्गः। रश्मिभिर्नियच्छतीत्यर्थः। उपमाद्वयम्। प्रथमायां नयनं द्वितीयायां नियमनम्। तथा मनः प्रवर्तयति नियच्छति च नरांनित्यर्थः। यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत् हृद्येव मन उपलभ्यते। यच्च मनः अजिरं जरारहितम् बाल्ययौवनस्थाविरेषु मनसस्तदवस्थत्वात्। यच्च जविष्ठम् अतिजववद्वेगवत् जविष्ठम् 'न वै वातात्किंचनाशीयोऽस्ति न मनसः किंचनाशीयोऽस्ति' इति श्रुतेः। तन्म इत्युक्तम् ॥ ६ ॥

शब्दा०—सुसारथिः = अच्छा सारथी, अश्वान् = घोड़ों को, इव = समान, यत् = जो मन, मनुष्यान् = मनुष्यों को, नेनीयते = अत्यन्त इधर उधर ले जाता है, अभीशुभिः = लगामों से, वाजिनः = घोड़ों को, इव = समान, हृत्प्रतिष्ठम् = हृदय में स्थित, यत् = जो मन, अजिरम् = जरारहित, जविष्ठम् = अतिशय वेगवान्, तत् = वह, मे = मेरा, मनः = मन, शिवसंकल्पम् — शुभ संकल्पवाला, अस्तु = हो।

अन्वय—यत् ( मनः ) सुसारथिः अश्वान् इव, अभीशुभिः वाजिन इव मनुष्यान् नेनीयते; यत् हृत्प्रतिष्ठम्, अजिरं, जविष्ठम्; तत् मे मनः शिवसंकल्पम् अस्तु।

***Trans.***—May that mind of mine, which impels living beings here and there, as a good charioteer does to horses, and controls them as with reins the horses, which resides in heart and is never old, and which is very swift, be of auspicious resolution.

***Notes***—ने॒नी॒यते॑—√*nī* to lead, inte. ( यङन्त ) Pres. Ātm. 3rd. sing. ; not unaccented because preceded by यत्.

हि० अ०—जो मन मनुष्यों को बार-बार इधर उधर प्रेरित करता है जैसे अच्छा सारथी घोड़ों को और लगामों द्वारा घोड़ों की तरह अपने वश में रखता है, जो हृदय में स्थित है, जो जरा से रहित और अत्यन्त वेगवान् है, वह मेरा मन शुभ संकल्पवाला हो।

# ATHARVAVEDA

No. 18 XII.1

## PRTHIVĪ SŪKTA

सत्यं बृहदृतमुग्रं दीक्षा तपो
ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्यु-
रुं लोकं पृथिवी नः कृणोतु ॥ १ ॥

सत्यम् । बृहत् । ऋतम् । उग्रम् । दीक्षा । तपः । ब्रह्म । यज्ञः । पृथिवीम् । धारयन्ति ॥ सा । नः । भूतस्य । भव्यस्य । पत्नी । उरुम् । लोकम् । पृथिवी । नः । कृणोतु ॥

शब्दा०—सत्यम् = सत्य, बृहत् = विशाल, महान्, ऋतम् = शाश्वत नियम, उग्रम् = प्रचण्ड, दीक्षा = यज्ञ से पूर्व यजमान का संस्कार, तपः = तपस्या, ब्रह्म = प्रार्थना, ब्रह्म, यज्ञः = यज्ञ, पृथिवीम् = पृथिवी को, धारयन्ति = धारण करते हैं, सा = वह, नः = हमारे, भूतस्य = भूत की, भव्यस्य = भविष्य की, पत्नी = रक्षिका, उरुम् = विशाल, लोकम् = लोक को, पृथिवी = पृथिवी, नः = हमारे लिये, कृणोतु = करे ।

अन्वय—बृहत् सत्यम्, उग्रम् ऋतम्, दीक्षा, तपः, ब्रह्म, यज्ञः (एते) पृथिवी धारयन्ति । सा नः भूतस्य भव्यस्य पत्नी पृथिवी (इमं) उरुं लोकं नः कृणोतु ।

हि० अ०—महान् सत्य, प्रचण्ड शाश्वत नियम, दीक्षा, तपस्या, मन्त्र, और यज्ञ (इस) पृथिवी को धारण करते हैं । वह हमारे भूत और भविष्य की रक्षा करनेवाली पृथिवी (इस) विशाल लोक को हमारे लिये करे ।

***Trans.***—The great Truth, the terrible Eternal law, the consecrating Rite, penance, prayer, and Sacrifice (all

these ) uphold the Earth. May she, the protector of our past and future, the earth, make this vast world for us.

*Notes*—ऋतम्—See notes on ऋतस्य ( RV.I.1 8 ) ब्रह्म—When the word ब्रह्म accents the first syllable it means 'Prayer'. धारयन्ति √ *dhṛ* 'to hold', caus. pres. 3rd. plu. कृणोतु √ *Kṛ* 'to make' impv. 3rd. sing.

असंबाधं मध्यतो मानवानां
यस्या उद्वतः प्रवतः समं बहु ।
नानावीर्या ओषधीर्या बिभर्ति
पृथिवी नः थतां राध्यतां नः ॥ २ ॥

असम्ऽबाधम् । मध्यतः । मानवानाम् । यस्याः । उत्ऽवतः । प्रऽवतः । समम् । बहु ॥ नानाऽवीर्याः । ओषधीः । या । बिभर्ति । पृथिवी । नः । प्रथताम् । राध्यताम् । नः ।

शब्दा०—असंबाधम् = बाधारहित, मध्यतः = मध्य में, मानवानाम् = मनुष्यों के, यस्याः = जिसके, उद्वतः = ऊंचे, प्रवतः = नीचे, समम् = समतल, बहु = बहुत, नानावीर्याः = अनेक पराक्रमवाली, ओषधीः = ओषधियों को, या = जो, बिभर्ति = पोषण करती है, पृथिवी = पृथिवी, नः = हमे, प्रथताम् = फैलावे, राध्यताम् = समृद्ध करे, नः = हमें ।

अन्वय—( या ) मानवानां मध्यतः असंबाधं ( अस्ति ); यस्यः उद्वतः प्रवतः समं बहु ( प्रदेशाः सन्ति ); या नानावीर्याः ओषधीः बिभर्ति, ( सा ) पृथिवी नः प्रथताम्, नः राध्यताम् ।

हि० अ०—( जो ) मनुष्यों के मध्य बाधारहित है; जिसके ऊंचे, नीचे तथा समतल अनेक ( प्रदेश ) हैं, जो नाना पराक्रमवाली ओषधियों को धारण करती है, ( वह ) पृथिवी हमें फैलावे और हमें समृद्ध करे ।

*Trans.*—Among men ( who ) is unobstructed ; whose are many high, low and level ( plains ), who bears the plants endowed with many varied powers, may ( she ) the Earth spread wide for us and make us prosperous.

*Notes*—असंबाधम्—नञ् + सम् √*bādh* 'too bstruct', Griffith takes it to mean 'not crowded by the crowd'. उद्वतः, प्रवतः—See उद्वतः and प्रवतः ( Ṛv. 1.35.3 ). नानावीर्या—Having many varied powers, Bahuvrīhi compd. accented on the first member. बिभर्ति—√*bhṛ* 'to bear' pres. 3rd. sind. not unaccented because preceded by या. प्रथताम्—√*prath* 'to spread' Ātm. impv. 3rd. sing. राध्यताम्—√rādh 'to accomplish', Ātm. impv. 3rd. sing; not unaccented because beginning of a sentence.

यस्यां समुद्र उत सिन्धुरापो
यस्यामन्नं कृष्टयः संबभूवुः ।
यस्यामिदं जिन्वति प्राणदेजत्
सा नो भूमिः पूर्वपेये दधातु ॥ ३ ॥

यस्याम् । समुद्रः । उत । सिन्धुः । आपः । यस्याम् । अन्नम् । कृष्टयः । सम्ऽबभूवुः ॥ यस्याम् । इदम् । जिन्वति । प्राणत् । एजत् । सा । नः । भूमिः । पूर्वऽपेये । दधातु ॥

शब्दा०—यस्याम् = जिसपर, समुद्रः = समुद्र, उत = और, सिन्धुः = नदी, आपः = जल, यस्याम् = जिस पर, अन्नम् = अन्न, कृष्टयः = मनुष्य, संबभूवुः = सत्ता में हैं, यस्याम् = जिसपर, इदम् = यह सब, जिन्वति = प्रसन्न होता है, प्राणत् = सांस लेता है, एजत् = विचरण करता है, सा = वह, नः = हमें, भूमिः = पृथिवी, पूर्वपेये = प्रथम स्थान में, दधातु = प्रतिष्ठान करे ।

अन्वय—यस्यां समुद्रः उत सिन्धुः आपः, यस्याम् अन्नं कृष्टयः संबभूवुः; यस्याम् इदं जिन्वति, प्राणत्, एजत्; सा भूमिः नः पूर्वपेये दधातु ।

हि० अ०—जिस ( पृथिवी ) पर समुद्र, नदी और जल हैं; जिस पर अन्न तथा प्राणी सत्ता में हैं; जिस पर ये ( सभी ) आनन्दित होते हैं, सांस लेते हैं तथा विचरण करते हैं, वह भूमि हमें सर्वप्रथम स्थान में प्रतिष्ठित करे ।

*Trans.*—In whom are the ocean, river and waters, in whom are existed the food and the creatures ; in whom are active, breathing and moving ; may this Earth place us in first drink.

*Notes*—कृष्टयः—Nom. plu. of कृष्टि from √*Kṛṣ* 'to plough'. Griffith takes it to mean 'corn–lands'. But in the present context it should be taken to mean creatures, that live on food. संबभूवुः—सम् + √*bhū* 'to be' perf. 3rd. plu. ; not unaccented because preceded by यस्याम्. जिन्वति–√*Jinv* 'to puicken' pres. 3rd. sing ; not unaccented because preceded by यस्याम् प्राणत्—प्र + √*an* 'to breathe' ; here Upasarga is not separated by avagraha in the padatext ; because अनत् is not used as independent word. एजत्—√*ej* 'to stir' + शतृ. पूर्वपेयं—Upapada compd. accented on the second member ( गतिकारकोपपदात्कृत् Pāṇ. VI.2.139 ).

यस्याश्चतस्रः प्रदिशः पृथिव्याः
यस्यामन्नं कृष्टयः संबभूवुः ।
या बिभर्ति बहुधा प्राणदेजत्
सा नो भूमिर्गोष्वप्यन्ने दधातु ॥ ४ ॥

यस्याः । चतस्रः । प्रऽदिशः । पृथिव्याः । यस्याम् । अन्नम् । कृष्टयः । सम्ऽबभूवुः ॥ या । बिभर्ति । बहुऽधा । प्राणत् । एजत् । सा । नः । भूमिः । गोषु । अपि । अन्ने । दधातु ॥

शब्दा०—यस्याः = जिसके, चतस्रः = चार, प्रदिशः=दिशायें, पृथिव्याः = पृथिवी की, यस्याम् = जिसपर, अन्नम् = अन्न, कृष्टयः = प्राणी, संबभूवुः = सत्ता में हैं, या = जो, बिभर्ति = धारण करती है, बहुधा = अनेक प्रकार से, प्राणत् = सांस लेनेवाले को, एजत् = विचरण करनेवाले को, सा = वह, नः = हमें, भूमिः = पृथिवी, गोषु = गायों में, अपि = भी, अन्ने, दधातु = धारण करे ।

अन्वय—यस्याः पृथिव्याः चतस्रः प्रदिशः ( सन्ति ); यस्याम् अन्नं कृष्टयः संबभूवुः या प्राणद् एजत् बहुधा बिभर्ति; सा भूमिः नः गोषु अन्ने अपि दधातु ।

हि० अ०—जिस पृथिवी की चार दिशायें हैं; जिसमें अन्न तथा प्राणियों की सत्ता है, जो सांस लेनेवाले तथा विचरण करनेवाले को अनेक प्रकार से धारण करती है, वह पृथिवी हमें गायों में तथा अन्न में प्रतिष्ठित करे ।

*Trans.*—Earth of whose are the four quarters ; in whom are existed the food and the creatures ; who holds in varied may the breathing and moving ( creatures ) may this Earth place us in cows and also in food.

यस्यां पूर्वे पूर्वजना विचक्रिरे
यस्यां देवा असुरानभ्यवर्तयन् ।
गवामश्वानां वयसश्च विष्ठा
भगं वर्चः पृथिवी नो दधातु ॥ ५ ॥

यस्याम् । पूर्वे । पूर्वऽजनाः । विऽचक्रिरे । यस्याम् । देवाः । असुरान् । अभिऽअवर्तयन् ॥ गवाम् । अश्वानाम् । वयसः । च । विऽस्था । भगम् । वर्चः । पृथिवी । नः । दधातु ॥

शब्दा०—यस्याम् = जिस पर, पूर्वे = पहले, पूर्वजनाः = पूर्वजों ने, विचक्रिरे = विचरण किया था, यस्याम् = जिस पर, देवाः = देवों ने, असुरान् = असुरो को, अभ्यवर्तयन् = निष्कासित किया था, गवाम् = गायों को, अश्वानाम् = अश्वों का, वयसश्च = पक्षियों का, विष्ठा = निवासस्थान, भगम् = सौभाग्य, वर्चः = तेज, पृथिवी = पृथिवी, नः = हमें, दधातु = धारण करावे ।

अन्वय—पूर्वे यस्यां पूर्वजना विचक्रिरे, यस्यां देवाः असुरान् अभ्यवर्तयन् ; ( या ) गवाम् अश्वानां वयसश्च विष्ठा ( अस्ति ); ( सा ) पृथिवी नः भगं वर्चः दधातु ।

हि० अ०—पहले पूर्वजों ने जिसके ऊपर विचरण किया था; जिस पर देवों ने असुरों को पराजित किया था; ( जो ) गायों, अश्वों तथा पक्षियों की निवास स्थल है, ( वह ) पृथिवी हमें सौभाग्य तथा तेज धारण करावे ।

*Trans.*—On whom, in aforetime, the ancestors battled; on whom the gods attacked the demons; (who is) the varied station of cows, horses and birds; may this Earth vouchsafe us fortune and lustre.

*Notes*—विचक्रिरे—√ *Kṛ* 'to make' Ātm. perf. 3rd. plu.: not unaccented because preceded by यस्याम्. अभ्यवर्तयन्—अभि + √ *Vṛt* 'to turn' caus. impf. 3rd. plu; not unaccented because preceded by यस्याम्. विष्ठा—वि + √*sthā* to stand' + क.

विश्वंभरा वसुधानी प्रतिष्ठा
हिरण्यवक्षा जगतो निवेशनी ।
वैश्वानरं बिभ्रती भूमिरग्नि-
मिन्द्रऋषभा द्रविणे नो दधातु ॥ ६ ॥

विश्वम्ऽभरा । वसुऽधानी । प्रतिऽस्था । हिरण्यऽवक्षा । जगतः । निवेशनी ॥ वैश्वानरम् । बिभ्रती । भूमिः । अग्निम् । इन्द्रऽऋषभा । द्रविणे । नः । दधातु ॥

शब्दा०— विश्वंभरा = सबका भरण-पोषण करनेवाली, वसुधानी = धन को धारण करनेवाली, प्रतिष्ठा = सबके खड़े होने का स्थान, हिण्यवक्षा = स्वर्ण की वक्षस्थलवाली, जातः = संसार को, निवेशनी = आराम देने वाली, वैश्वानरम् = वैश्वानर अग्नि का एक नाम है, विभ्रती = धारण करती हुई है, भूमिः = पृथिवी, अग्निम् = अग्नि को, इन्द्रऋषभा = इन्द्र द्वारा संरक्षित, द्रविणे = धन में, नः = हमें, दधातु = प्रतिष्ठित करे ।

अन्वय—विश्वंभरा, वसुधानी, प्रतिष्ठा, हिरण्यवक्षा, जातः निवेशनी, इन्द्रऋषभा भूमिः वैश्वानरम् अग्निं बिभ्रती नः द्रविणे दधातु ।

हि० अ०—सबका भरण पोषणे करने वाली, धन को धारण करने वाली, सबके खड़े होने का स्वर्णवक्षा स्थल वाली, जगत् को आराम देने वाली, इन्द्र द्वारा रक्षित पृथिवी वैश्वानर अग्नि को धारण करती हुई हमें धन में प्रतिष्ठित करे ।

*Trans.*—( Who is ) all-bearing, store of riches, firm standing-place, gold-breasted and harbouror of the moving ( world ); may this Earth, having Indra as her protector, bearing the universal Agni, place us in wealth

*Notes.*—विश्वंभरा—विश्वं भरतीति सा या विश्वंभरा. Tatpuruṣa compd. accented on the final syllable ( समासस्य Pāṇ. VI. 1.223 ). वसुधानी—वसु + √dhā 'to put' + ल्युट् + ङीप्. हिरण्यवक्षा—Bahuvrīhi compd. accented on the first member. निवेशनी—See निवेशनीम् (Rv. I.35.1). बिभ्रती—√bhr. 'to bear' + शतृ + ङीप् accented on the reduplicated syallable ( अभ्यस्तानामादिः Pāṇ. VI.1 189 ). इन्द्रऋषभा—Bahuvrīhi compd. accented on the first member.

यां रक्षन्त्यस्वप्ना विश्वदानीं
देवा भूमिं पृथिवीमप्रमादम् ।
सा नो मधु प्रियं दुहा-
मथो उक्षतु वर्चसा ॥ ७ ॥

याम् । रक्षन्ति । अस्वप्नाः । विश्वऽदानीम् । देवाः । भूमिम् । पृथिवीम् । अप्रऽमादम् ॥ सा । नः । मधु । प्रियम् । दुहाम् । अथो इति । उक्षतु । वर्चसा ॥

शब्दार्थ—याम् = जिसकी, रक्षन्ति = रक्षा करते हैं, अस्वप्नाः = कभी न सोनेवाले, विश्वदानीम् = सर्वदा, देवाः = देव, भूमिम् = भूमि को, पृथिवीम् = चौड़ी, अप्रमादम् = विना किसी प्रमाद के, सा = वह, नः = हमें, मधु = मधुर, प्रियम् = प्रिय, दुहाम् = चुआवे, अथो = और, उक्षतु = सिञ्चित करे, वर्चसा = तेज से ।

अन्वय—यां पृथिवीं भूमिम् अस्वप्नाः देवा विश्वदानीम् अप्रमादं रक्षन्ति सा ( पृथिवी ) नः प्रियं मधु दुहाम् अथो वर्चसा उक्षतु ।

हि० अ०—जिस विशाल भूमि की, कभी न सोनेवाले देव सर्वदा प्रमाद रहित होकर रक्षा करते हैं, वह ( पृथिवी ) हमें प्रिय मधु चुआवे और तेज से अभिसिञ्चित करे ।

*Trans.*—The wide and all-giving Earth, whom the gods who never sleep always protect with ceaseless care, may she pour out for us the lovely mead and sprinkle ( us ) with lustre.

*Notes*—रक्षन्ति—√*rakṣ* 'to protect' pres. 3rd. sing. ; not unaccented because preceded by याम्. विश्वदानीम्-विश्व + √*dā* 'to give' + ल्युट् + ङीप्. Sāyaṇa takes it as an adverb and renders by 'सर्वकालम्' ( Sā. on RV.I.164.40 ). Griffith following Sāyaṇa takes it to mean 'always'. According to MWD. विश्वदानीम् means 'all-giving'. दुहाम्—√*duh* 'to milk' impv. Ātm. 3rd. Sing. See notes on (ṚV. VI 54.3) उक्षतु—√*ukṣ* 'to sprinkle' impv. 3rd. sing.

यार्णवेऽधि सलिलमग्र आसीत्
यां मायाभिरन्वचरन् मनीषिणः।
यस्या हृदयं परमे व्योऽमन्-
त्सत्येनावृतममृतं पृथिव्याः।
सा नो भूमिस्त्विषिं बलं
राष्ट्रे दधातूत्तमे ॥ ८ ॥

या । अर्णवे । अधि । सलिलम् । अग्रे । आसीत् । याम् । मायाभिः । अनुऽचरन् । मनीषिणः ॥ यस्याः । हृदयम् । परमे । विऽओमन् । सत्येन । आऽवृतम् । अमृतम् । पृथिव्याः । सा । नः । भूमिः । त्विषिम् । बलम् । राष्ट्रे । दधातु । उत्ऽतमे ॥

शब्दाः—या = जो, अर्णवे, अधि = ऊपर, सलिलम् = जल, अग्रे = पहले, आसीत् = थी, याम् = जिसको, मायाभिः = कर्मों द्वारा, या बुद्धि से, अन्वचरन् = अनुसरण किया था, मनीषिणः = बुद्धिमानों ने, यस्याः = जिसका, हृदयम् = हृदय, परमे = सर्वोच्च, व्योमन् = आकाश में, सत्येन = सत्य द्वारा आवृतम् = ढका हुआ है, अमृतम् = अमृत, पृथिव्याः = पृथिवी

का सा = वह, नः = हमें, भूमिः = पृथिवी, त्विषिम् = तेज, बलम् = शक्ति, राष्ट्रे = राष्ट्र में, दधातु = धारण करावे, उत्तमे = सर्वश्रेष्ठ।

अन्वय—या ( पृथिवी ) अग्रे अर्णवे अधि सलिलम् आसीत् ; यां मनीषिणः मायाभिः अन्वचरन् ; यस्याः पृथिव्याः सत्येन आवृतम् अमृतं हृदयं परमे व्योमन् ( अस्ति ) सा भूमिः नः उत्तमे राष्ट्रे त्विषिं बल दधातु।

हि० अ०—जो पहले समुद्र में जल के रूप में थी; जिसका बुद्धिमानों ने अपनी बुद्धि से अनुसरण किया; जिस पृथिवी का सत्य से ढका हुआ कभी न मरनेवाला हृदय सर्वोच्च आकाश में है; वह पृथिवी हमारे सर्वश्रेष्ठ राष्ट्र में तेज और शक्ति धारण करावे।

***Trans.***—Who at first was water in the ocean; whom the wise ones followed with their powers; the Earth whose immortal heart, encompassed with Truth, is in the highest heaven; May she, the Earth, bestow upon our great nation the lustre and the power.

***Notes***—आसीत्—√*as* 'to be', impf. 3rd. sing. ; not unccented because preceded by या. अन्वचरन्—अनु + √*car* 'to move' imf. 3rd. plu.; not unaccented because preceded by याम्. व्योऽमन्—Loc. sing. termination has been dropped ( सुपां सुलुक्०—Pāṇ. VII. 1.39 ). In the Atharvaveda Sahimitā क्षैप्रस्वरित if not followed by Udātta, is marked with the sign. ( ऽ )

यस्यामापः परिचराः समानी-
रहोरात्रे अप्रमादं क्षरन्ति ।
मा नो भूमिर्भूरिधारा पयो दुहा-
मथो उक्षतु वर्चसा ॥ ९ ॥

यस्याम् । आपः । परिऽचराः । समानीः । अहोरात्रे इति । अप्रमादम् । क्षरन्ति ॥ सा । नः । भूमिः । भूरिऽधारा । पयः । दुहाम् । अथो इति । उक्षतु । वर्चसा ॥

शब्दा०—यस्याम् = जिसमें, आपः = जल, परिचराः = चारों तरफ विचरण करने वाले, समानी = सार्वभौमिक, अहोरात्रे = दिन-रात, अप्रमादम् = प्रमादरहित होकर, क्षरन्ति = बहते हैं, सा = वह, नः = हमारे लिये, भूमिः = पृथिवी, भूरिधारा = अनेक धारा वाली, पयः = दूध, दुहाम् = चुआवे, अथो = और उक्षतु = अभिसिञ्चित करे, वर्चसा = तेज से।

अन्वय—यस्यां (पृथिव्यां) परिचराः समानीः आपः अहोरात्रे अप्रमादं क्षरन्ति; सा भूरिधारा भूमिः नः पयः दुहाम्; अथो वर्चसा उक्षतु।

हि० अ०—जिस (पृथिवी) पर चारों तरफ विचरण करने वाले सार्वभौमिक जल दिन-रात प्रमाद रहित होकर प्रवाहित होते हैं; वह अनेक धाराओं वाली पृथिवी हमारे लिये दूध चुआवे और तेज से अभिसिञ्चित करे।

*Trans.*—In whom the all-moving universal waters day and night unceasingly flow; May she, the Earth of many streams, pour out for us the milk and sprinkle (us) with lustre.

*Notes.*—क्षरन्ति—√*kṣar* 'to flow', pres. 3rd. plu.; not unaccented because preceded by यस्याम् अहोरात्रे—Dvandva compd. accented on the final syllable. Final Syllable is pragṛhya; hence, इति in the pada-text. भूरिधारा—Bahuvrīhi compd. accented on the first member. दुहाम्—See AV. XII 1.7. उक्षतु—See AV. XII.1.7. अथो—(अथ + उ) a Final ओ is pragṛhya.

यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे।
इन्द्रो यां चक्र आत्मनेऽनमित्रां शचीपतिः।
सा नो भूमिर्वि सृजतां माता पुत्राय मे पयः॥ १०॥

याम्। अश्विनौ। अमिमाताम्। विष्णुः। यस्याम्। विऽचक्रमे। इन्द्रः। याम्। चक्रे। आत्मने। अनमित्राम्। शचीऽपतिः। सा। नः। भूमिः। वि। सृजताम्। माता। पुत्राय। मे। पयः॥

शब्दा०—याम् = जिसको, अश्विनौ = दोनों अश्विनीकुमारों ने, अमिमाताम् = नापा था, विष्णु = विष्णु ने, यस्याम् = जिस पर, विचक्रमे = कदम रखा था, इन्द्रः = इन्द्र ने, याम् = जिसको, चक्रे = किया था, आत्मने = अपने लिये, अनमित्राम् = शत्रुरहित, शचीपतिः = शक्ति के स्वामी, सा = वह, नः = हमारे लिये, भूमिः = पृथिवी, विसृजताम् = प्रवाहित करे, माता = माता, पुत्राय = पुत्र के लिये, मे = मेरे लिये, पयः = दूध।

अन्वय—यां (पृथिवीम्) अश्विनौ अमिमातां, यस्यां विष्णुः विचक्रमे, यां शचीपतिः इन्द्रः आत्मने अनमित्रां चक्रे, सा भूमिः नः पयः विसृजताम्, माता पुत्राय मे (पयः विसृजताम्)।

हि० अ०—जिसको अश्विनी कुमारों ने नापा था, जिस पर विष्णु ने कदम रखा था, शक्ति के स्वामी इन्द्र ने अपने लिये जिसको शत्रुरहित बनाया था, वह पृथिवी हमारे लिये, माता मुझ पुत्र के लिये दूध प्रवाहित करे।

*Trans.*—Whom the Aśvins measured out; upon whom viṣṇu strode; whom Indra the lord of power, made it foeless for himself; May she the Earth pour out her milk for us, for me her son.

*Notes.*—अमिमाताम्—√*mā* 'to measure' impf. 3rd. dual; not unaccented because preceded by याम्. विचक्रमे-वि + √*kram* 'to stride', Ātm. perf. 3rd. sing; not unaccented because preceded by यस्याम्. चक्रे—√*Kr* 'to make' Ātm. Perf. 3rd sing. अनमित्राम्—Bahuvrihi compd. accented on the second. member. शचीपतिः—It is a word of double accent (उभे वनस्पत्यादिषु युगपत्—Pāṇ VI. 2. 140). सृजताम् √*Sr* 'to emit' impv. 3rd sing.

गिरयस्ते पर्वता हिमवन्तो-
ऽरण्यं ते पृथिवि स्योनमस्तु।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां
ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम्।
अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम्॥११॥

गिरयः । ते । पर्वताः । हिमऽवन्तः । अरण्यम् । ते । पृथिवि । स्योनम् । अस्तु । बभ्रुम् । कृष्णाम् । रोहिणीम् । विश्वऽरूपाम् । ध्रुवाम् । भूमिम् । पृथिवीम् । इन्द्रऽगुप्ताम् । अजीतः । अहतः । अक्षतः । अधि । अस्थाम् । पृथिवीम् । अहम् ॥

शब्दा०—गिरयः = पहाड़ियां, ते = तुम्हारी, पर्वताः = पर्वत, हिमवन्तः = हिमयुक्त, अरण्यम् = जंगल, ते = तुम्हारे, पृथिवी = हे पृथिवी, स्योनम् = सुखकर, अस्तु = होवे, बभ्रुम् = भूरे वर्ण की, कृष्णम् = कृष्णवर्ण की, रोहिणीम् = लाल वर्ण की, विश्वरूपाम् = अनेक रूपों वाली, ध्रुवाम् = अटल, भूमिम् = पृथिवी, पृथिवीम् = चौड़ी, इन्द्रगुप्ताम् = इन्द्र द्वारा अभिक्षित, अजीतः = किसी के द्वारा न जीता जानेवाला, अहतः = किसी के द्वारा न मारा जानेवाला, अधि अस्थाम् = स्थित हुआ है, पृथिवीम् = पृथिवी के ऊपर, अहम् = मैं । अक्षतः = किसी के द्वारा क्षत न होनेवाला ।

अन्वय—( हे ) पृथिवी, ते गिरयः हिमवन्तः पर्वताः, ते अरण्यं ( नः ) स्योनम् अस्तु । अजीतः अहतः अक्षतः अहं बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवाम् इन्द्रगुप्तां पृथिवीं भूमिम् अधि अस्थाम् ।

हि० अ०—हे पृथिवी, तुम्हारी पहाड़ियाँ, हिमयुक्त पर्वत तथा तुम्हारे जंगल ( हमारे लिये ) सुखकर होवें । किसी के द्वारा न जीता जाने वाला, किसी के द्वारा न मारा जाने वाला तथा किसी के द्वारा क्षत न होने वाला मैं पृथिवी पर भूरी, काली, लाल, अनेक रूपवाली, चौड़ी तथा इन्द्र द्वारा अभिरक्षित पृथिवी पर स्थित हुआ हूँ ।

*Trans.*—O Earth, thy hills, ( thy, ) snowy mountains and thy forest be auspicious. I, unconquered, unslained and unwounded; have set foot upon earth brown, black, ruddy, all-coloured, firm and protected by Indra.

*Notes*—हिमवन्तः—Nom. plu. of हिमवत् from हिम + मतुप्. विश्वरूपाम्—In Bahuvrīhi the word विश्व, though originally accented on the first syllable, shifts its accent to the final syllable ( बहुव्रीहौ विश्वं संज्ञायाम्—Pāṇ VI. 2. 106 ). इन्द्रगुप्ताम्—Bahuvrīhi compd. accented on the first member. अस्थाम्—√ *sthā* 'to stand' root-aorist, 1st. sing.

यत् ते मध्यं पृथिवि यच्च नभ्यं
यास्त ऊर्जस्तन्वऽः संबभूवुः ।
तासु नो धेह्यभि नः पवस्व
माता भूमिः पुत्रो अहं पृथिव्याः ।
पर्जन्यः पिता स उं नः पिपर्तु ॥ १२ ॥

यत् । ते । मध्यम् । पृथिवि । यत् । च । नभ्यम् । याः । ते । ऊर्जः । तन्वऽः । सम्ऽबभूवुः । तासु । नः । धेहि । अभि । नः । पवस्व । माता । भूमिः । पुत्रः । अहम् । पृथिव्याः । पर्जन्यः । पिता । सः । ऊँ इति । नः । पिपर्तु ॥

शब्दा०—यत् = जो, ते = तुम्हारा, मध्यम् = मध्य भाग, पृथिवि = हे पृथिवि, यत् = जो, च = और, नभ्यम् = नाभिभाग, याः = जो, ते = तुम्हारे, ऊर्जः = शक्तियां, तन्वः = शरीर से, संबभूवुः = उत्पन्न हुई हैं, तासु = उनमें, नः = हमें, धेहि = प्रतिष्ठित करो, अभि = ओर, नः = हमारी, पवस्व = प्रवाहित करो, माता = माता, भूमिः = पृथिवी, पुत्रः = पुत्र, अहम् = मैं, पृथिव्याः = पृथिवी का, पर्जन्यः = पर्जन्यमेघ का दैवीकृत एवं मानवीकृत रूप, पिता = पिता, सः = वह, उ = ही, नः = हमें, पिपर्तु = पार करे ।

अन्वय—( हे ) पृथिवि, यत् ते मध्यं यत् च नभ्यं याः ऊर्जः ते तन्वः संबभूवुः तासु नः धेहि, अभि नः पवस्व, भूमिः माता अहं पृथिव्याः पुत्रः ( अस्मि ), पर्जन्यः नः पिता ( अस्ति ) स उ नः पिपर्तु ।

हि० अ०—हे पृथिवी, जो तुम्हारा मध्य भाग है और जो नाभि भाग है जो शक्तियां तुम्हारे शरीर से उत्पन्न हुई हैं, हमें प्रतिष्ठित करो; ( उन्हें ) हमारी ओर प्रवाहित करो । पृथिवी माता है, मैं पृथिवी का पुत्र हूँ; वही हमें पार करे ।

*Trans.*—O Earth, set us amid those which is thy centre, and which is thy navel, which are thy forces produced by thy body. Make them flow towards us. Earth is mother

and I am the son of Earth ; Parjanya is father ; May he take us across ( from the miseries ).

*Notes*—संबभूवुः—See Av. XII. 1.3. धेहि—√*dhā* 'to put' impv 2nd. sing. पवस्व —√ *Pū* to cleanse', Ātm. Impv. 2nd sing. पिपर्तु—√ *pr* 'to pass , impv. 3rd. sing.

यस्यां वेदिं परिगृह्णन्ति भूम्यां
यस्यां यज्ञं तन्वते विश्वकर्माणः ।
यस्यां मीयन्ते स्वरवः पृथिव्या-
मूर्ध्वाः शुक्रा आहुत्याः पुरस्तात् ।
सा नो भूमिर्वर्धयद् वर्धमाना ॥ १३ ॥

यस्याम् । वेदिम् । परिऽगृह्णन्ति । भूम्याम् । यस्याम् । यज्ञम् । तन्वते । विश्वऽकर्माणः । यस्याम् । मीयन्ते । स्वरवः । पृथिव्याम् । ऊर्ध्वाः । शुक्राः । आऽहुत्याः । पुरस्तात् । सा । नः । भूमिः । वर्धयत् । वर्धमाना ॥

शब्दार्थ—यस्याम् = जिस पर, वेदिम् = वेदी का, परिगृह्णन्ति = परिग्रह करते हैं, भूम्याम् = पृथिवी पर, यस्याम् = जिस पर, यज्ञम् = यज्ञ तन्वते = सम्पन्न करते हैं, विश्वकर्माणः = देवता, यस्याम् = जिस पर, मीयन्ते = गाड़े जाते हैं, स्वरवः = यज्ञीय यूप, पृथिव्याम् = पृथिवी पर, ऊर्ध्वाः = ऊँचे, शुक्राः = प्रकाशमान, आहुत्याः = आहुति के, पुरस्तात् = सामने, सा = वह, भूमिः = पृथिवी, नः = हमें, वर्धयत् = प्रवृद्ध करे, वर्धमाना = प्रवृद्धा होती हुई ।

अन्वय—यस्यां भूम्यां वेदिं परिगृह्णन्ति विश्वकर्माणः यस्यां यज्ञं तन्वते, यस्यां पृथिव्यां ऊर्ध्वाः शुक्राः स्वरवः आहुत्याः पुरस्तात् मीयन्ते, सा भूमिः वर्धमाना नः वर्धयत् ।

हि० अ०—जिस पृथिवी पर देवता वेदी का परिग्रह करते तथा जिस पर यज्ञ सम्पन्न करते हैं, जिस पृथिवी पर ऊँचे, एवं प्रकाशमान यज्ञीय यूप आहुति से पहले गाड़े जाते हैं, वह पृथिवी प्रवृद्ध होती हुई हमें प्रवृद्ध करे ।

*Trans.*—Earth on whom (the gods) enclose the altar; on whom (they) perform the sacrifice; Earth on whom the lofty and shining sacrificial stakes are fixed before the offering; may that Earth prospering make us prosper.

*Notes*—परिगृह्णन्ति—परि + √*grah* 'to seize' pres. 3rd. plu; not unaccented because preceded by यस्याम्. तन्वते—√*tan* 'to stretch' Ātm. pres. 3rd. plu; not unaccented because preceded by यस्याम्. विश्वकर्माणः—It is an epithet generally attributed to gods. Griffith explains it by 'all-performers' Bahuvrihi compd. accented on the first member. See विश्वरूपाम्—(AV. XII. I. 11). मीयन्ते—√*mā* 'to measure' pass. Ātm. pres. 3rd. plu; not unaccented because preceded by यस्याम्. वर्धयत्—√*vṛdh* 'to grow' caus. unangmented impf. (but impv. in sense) 3rd. sing. वर्धमाना—√*vṛdh* 'to grow' fem. nom. sing.

यो नो॒ द्वेष॑त् पृथिवि॒ यः पृ॑त॒न्याद्
योऽभि॒दासा॒न्मन॑सा॒ यो व॒धेन॑ ।
तं नो॑ भूमे रन्धय पूर्वकृत्वरि ॥ १४ ॥

यः । नः॒ । द्वेष॑त् । पृ॒थि॒वि॒ । यः । पृ॒त॒न्यात् । यः । अ॒भि॒ऽदासा॑त् । मन॑सा । यः । व॒धेन॑ । तम् । नः॒ । भू॒मे॒ । र॒न्ध॒य॒ । पू॒र्व॒ऽकृ॒त्व॒रि॒ ॥

शब्दा०—यः = जो, नः = हमसे, द्वेषत् = द्वेष करे, पृथिवि = हे पृथिवी, यः = जो, पृतन्यात् = शत्रुता का आचरण करे, यः = जो, अभिदासात् = दबावे, मनसा = मन से, यः = जो, वधेन = शस्त्र से, तम् = उसको, नः = हमारे लिये, भूमे = हे पृथिवी, रन्धय = नष्ट करो, पूर्वकृत्वरि = हे पूर्व कृत्यों वाली।

अन्वय—(हे) पृथिवि यः नः द्वेषत् यः पृतन्यात् यः मनसा यः वधेन अभिदासात् (हे) भूमे (हे) पूर्वकृत्वरि, तं नः रन्धय ।

